# यास्कीय निरुक्तस्य समीक्षात्मकमध्ययनम्

सम्पूर्णानन्द संस्कृत विश्वविद्यालयस्य
विद्यावारिधिः (पी० एच० डी०) इत्युपाधये
प्रस्तुतः शोधप्रबन्धः




१९९३ ई०


निर्देशक :
**डा० कुबेरनाथ पाठकः**
वेदाचार्यः, पी-एच० डी०
उपाचार्य, वेद विभाग
सम्पूर्णानन्द संस्कृतविश्वविद्यालये
वाराणस्याम

विक्रम सम्वत् २०५०
कार्तिक शुक्ला पूर्णिमा


अनुसंधाता
**श्रीराम पाण्डेय** वेदाचार्यः
वेद विभागाध्यक्षः
श्री वैकुण्ठनाथ पवहारि संस्कृत
महाविद्यालय वैकुण्ठपुर, देवरिया
(उ० प्र०)
पंजीकरणसंख्या १६८२/३१८३



**सम्पूर्णानन्द संस्कृत विश्वविद्यालयः, वाराणसी**

# यास्कीय निरुक्तस्य समीक्षात्मकमध्ययनम्

सम्पूर्णानन्द संस्कृत विश्वविद्यालयस्य
विद्यावारिधिः (पी० एच० डी०) इत्युपाधये
प्रस्तुतः शोधप्रबन्धः





१९९३ ई०

निर्देशक :
**डा० कुवेरनाथ पाठकः**
वेदाचार्यः, पी-एच० डी०
उपाचार्य, वेद विभाग
सम्पूर्णानन्द संस्कृतविश्वविद्यालये
वाराणस्याम
विक्रम सम्वत् २०५०
कातिक शुक्ला पूर्णिमा

अनुसंधाता
**श्रीराम पाण्डेय** वेदाचार्यः
वेद विभागाध्यक्षः
श्री वैकुण्ठनाथ पवहारि संस्कृत
महाविद्यालय वैकुण्ठपुर, देवरिया
(उ० प्र०)
पंजीकरणसंख्या १६८२/३१८३

**सम्पूर्णानन्द संस्कृत विश्वविद्यालयः, वाराणसी**

## निरुक्तस्य संस्तुतिः

यास्कीय निरुक्तस्य समीक्षात्मकमध्ययनमिति विषयमादाय श्री राम पाण्डेय वेदाचार्यः यो हि शोधकार्यं कृतवान् । तदतीवोत्साहपूर्णमस्ति । वेदस्य षडङ्गेषु-

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुः निरुक्तं श्रोत्रमुच्यते ।।
शिक्षाघ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ।।

वस्तु निरुक्तस्य माहात्म्यं सर्वाधिकमस्ति । श्रुतस्यावधारणं श्रोत्रेणैव सम्भवमस्ति । नान्यैरिन्द्रियैः बालकः श्रुतमनुसरति । शनैः शनैः श्रुत्वा श्रुत्वा अवधारयति । अवलोकनादवधारयति । न दृष्ट्वा । न स्पृष्ट्वा । श्रोत्रे प्रविशति प्रभवति च शब्द एव । स तदर्थं वक्तुं प्रभवति । निरुक्तस्यायमेव विषयः । प्रकृतिप्रत्ययपूर्वकमेव निरुक्ताः शब्दाः -

अर्थं प्रत्यक्षःप्रदर्श्या इति । पंचविधं निरुक्तमस्ति ।
वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पंचविधं निरुक्तम् ।।

निरुक्तं विना व्याकरणस्य पूर्णता न हि भवति । अर्थावगतिरपि न भवति । अत एवाह- तदिदं व्याकरणस्य कार्त्स्न्यम् । अथापि तद्विनार्थ-प्रत्ययो न विद्यते । निरुक्तमेव संस्कृते भाषाविज्ञानपुस्तकमस्ति । तत्राति-परोक्ष शब्दानां प्राचीनानाम् अतीतानामागतवर्तमानकालगत शब्दानां कथा प्रत्यर्थाभिगम: स्यात्तदर्थं त्रिस्र: प्रवृत्तयो निर्दिष्टा: सन्ति । अतिपरोक्ष वृत्ति: । परोक्षवृत्ति: । प्रत्यक्षवृत्तिश्च । एताभिस्तिसृभिर्वृत्तिभि:धातु प्रत्ययप्रत्ययान्तान्वेषण पूर्वकं वर्तमानकालप्रचलित शब्दव्यवहार: क्रियते इति दर्शितमस्ति । वैशिष्ट्यं चास्य ग्रन्थस्य स्वाद्विधायकस्य ग्रन्थस्य सम्यगध्ययनं विधाय प्रबल मनीषीवाजसनेयस्य च ग्रन्थस्य समीक्षणं तात्कालिकमितिहासमनया यथा स्वाभिमतं प्रदर्शितम् अयं शोधप्रबन्धो मुद्रणार्ह:-

अग्रसारितम्
डा० कुबेरनाथपाठक:
२८।१२।८३

(डॉ. कुबेरनाथ पाठक)
उपाचार्य वेद,
सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी.

## मंगलाचरणम्

[1] ॐ ब्रह्मयज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवःॐ।

[2] ॐ तद्विष्णोः परमंपदᳬसदापश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥

[3] ॐ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यः सखा ॥

[4] ॐ येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वं यक्षमन्तः प्रजानां तन्मेमनः शिव संकल्प मस्तु ॥

[5] ॐ नमः शम्भवाय च मयोभवाय च नमः शंकराय च मयस्कराय
च नमः शिवाय च शिवतराय ॐ ।

मन्दारमालाकुलितालिकायै, कपाल मालाङ्कित शेखराय ।
दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय ॥

---

2. शु॰यजु॰, 6.5.  3. शु॰यजु॰ ,6.4.
4. शु॰यजु॰ 34.2.  5. शु॰ यजु॰ 16.41.

## आत्मनिवेदनम्

सुविदितमेव विदुषां लोके समेषां कार्याणां सम्पादनम् परस्परसहयोगेनैव भवति । विशेषतस्तु शोधकार्ये परस्परं सहयोगे महानपेक्षते । येषां विद्द्वराणां सहयोगेनाशीर्वादेन चेदं बहुश्रमसाध्यकार्यमपि अल्पश्रमेणैव सम्पादितम्। तान् प्रति किंचिद् वाक्प्रसूनांजलिं समर्प्य किंचित् कृतज्ञतां ज्ञापयामि ।
प्रथमं तावद् आशुतोष साम्बविश्वेश्वरं प्रति साष्टाङ्ग प्रणतिं विधायनिन्तरम् विविध विद्यापारङ्गतानां प्रख्यात विदुषां प्रथित यशसां प्राच्यविद्या पारावार पारीणानं सङ्ग्ङ्ग विद्या धर्मशास्त्र कर्मकाण्ड पौरो हितीयादि विषये कृत परिश्रमाणां विचक्षणानां तपः पूतान्तःकरणानां डॉ॰ कुबेरनाथ पाठक गुरुवर्याणां श्री चरणयोः सततं सश्रद्धप्रणतिं व्याहरामि । येषां महता आशीर्वादेन निर्देशनेन च शोधकार्यं पूर्णतामगमत् । अतः परं संपूर्णानन्द संस्कृतविश्वविद्यालयस्य वेद विभागे आचार्य पदमलङ्कुर्वाणानां लोके शास्त्रे च लब्धप्रतिष्ठानां विद्द्वर्याणां प्रो॰डॉ॰युगल किशोर मिश्र गुरु चरणानां सततं कार्तज्ञतां ज्ञापयामि। यस्य मुहुर्मुहुः सत् प्रेरणेन शोध प्रबन्धो यं पूर्णतां प्रापितः । अतः परं वेद विभागे प्राध्यापक पदम लङ्कुर्वाणानां डॉ॰राममूर्ति चतुर्वेदी गुरुवर्याणां कृतेऽपि प्रणतिं व्याहरामि येषां सत्प्रेरणेन शोध कार्यं पूर्णता जाता । अतः परं संस्कृत वाङ्मये प्राप्त प्रतिष्ठानां विविध शास्त्र पारङ्गतानां श्री पं॰कुबेरनाथशुक्ल गुरुवर्याणां श्री चरणयोः शततं वन्दे । येषां माशीर्वादेन शोध कार्यं सम्पन्नम् । पुनस्तावद् बहुशास्त्र निष्णातानां श्रद्धेयास्पदानां श्रीमतां डॉ॰रमेश कुमार द्विवेदी

तथा च डॉ. रमेश चन्द्रदास शर्मा, श्री पं. बाबूरामधर द्विवेदी एवं च डॉ. हरिपाल द्विवेदी श्री चरणानां श्रद्धा सुमनं समर्प्य तान् प्रति कृतज्ञतां ज्ञापयामि। येषां परमाशीर्वादेन् शोधकार्य पूर्णतामगमत् अतः परं लौकिक शास्त्र निष्णातानां आतिथ्यादि कार्ये परम् दक्षानां देव, द्विज सम्पूजकानां पाण्डेय कुलावतंसानां श्री पं. सुदामा पाण्डेय महाभागानां पितृ चरणानां तथा च पूजनीयानां जननीनां कृते ऽपि च मुहुर्मुहुः सततं प्रणतिं व्याहरामि । येषां महत् पुण्येन संस्कृत अध्ययने तथा च शोधोपाधि क्रमे यत्किंचित् सफलता प्रापिता । तथा च भार्या विद्यावतीम्प्रत्यपि साधुवाद वादं दास्यामि । यस्या महत् सहयोगेन त्यागेन च शोध कार्ये सफलता प्रापिता ।

अनेनैव क्रमेन् स्व सहपाठिनां मित्र वर्याणां साहित्यादि शास्त्र निष्णातानां डॉ. रामसुरेश द्विवेदी तथा च डॉ. चारुचन्द्र त्रिपाठि महाभागानां कृते सततं साधुवादं समर्प्य कृतज्ञतां ज्ञापयामि येषां महद् सहयोगेन शोध कार्ये मया पूर्णता प्रापिता ।

अतः परं सम्पूर्णानन्द संस्कृत विश्वविद्यालयस्य समेषां गुरुवर्याणां कृतेऽपि साधुवादं समर्पयामि ।

अन्ते सर्वं पदं हस्तिपदे निमग्नं इति उक्तिं स्मृत्वा साम्बं हरं दुर्गां च प्रणतिं समर्पयामि ।

भवदीयः विनम्रः,

श्रीराम पाण्डेय

(श्रीराम पाण्डेय वेदाचार्यः)
प्राध्यापक
वेद विभागे,
श्री बैकुण्ठ नाथ पवहारि संस्कृत महाविद्यालय बैकुंठपुर,
देवरिया।

# भूमिका:

भूमण्डले निवसन्तीनां समस्त मानव जातीनामादिग्रन्थः ऋग्वेद एव हि वर्तते । यस्य रचना केनापि पुरुष विशेषेण कृता नास्ति । स्वयमेव वेदः सृष्टिकालादेव अकस्मात् ब्रह्ममुखात् प्रस्फुरितो भवत् । अस्या-पौरुषेयस्य वेदं श्रुतिरपि अपरा संज्ञास्ति इति कथयन्ति जनाः । अतएव अस्याः व्युत्पत्तिः श्रूयते इति श्रुतिः-

अनादि निधना नित्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयीवाणी यतः सर्वा प्रवृत्तयः ।।

मनुरपि प्रावोचत् "वेदो खिलो धर्ममूलम्" गीता वचनम् पि अत्र "वेदैश्च सर्वैरहमेव वेद्यः" एभिः वचनैः सर्वे वेदाः धर्मस्य मूलानि सन्तीति । धर्मस्य ज्ञानं वेदादेव भवितुं शक्नोति । यथा लिखितं—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।
एनं विदन्ति वेदेन् तस्माद् वेदस्य वेदता ।।

वेदान् भारतीया एव नहि अपितु विदेशीया अपि विद्वांसो मुक्तकण्ठेन् प्रशंसन्ति ।

ऋग्वेदविषये—

सर्वेष्वपि वेदज्ञा पुरोहिता प्रवदन्ति इति । स्पष्टं भारतीया अभिप्रयन्ति यथा-

वेद शब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे । पाश्चात्यास्मिन् वैज्ञानिके युगे सर्ववेदात् प्रसिद्ध्यति, इत्थं सिद्धान्तास्तत्रानेन श्रेयसी भवति वाचन्वृयोगतः साधयितुं । यदपि भारतीया ऋषयः आचार्याः महापुरुषाश्च आध्यात्मदृष्टि प्रधाना एव भवन्तितम ।

तत्तु सांसारिक ऐश्वर्येषु योधिता पुष्टान् प्राप्त शक्ति प्रदर्शनं कर्तुं कारयितुं साधयितुं प्रचारयितुं वा नैव ते प्रारोचयन्त । अथापि वेदस्य वैदिकानां वा महिमा भारतीयेषु इतिहासेषु पुराणेषु च बाहुल्येन अस्ति । वेदज्ञानाद्विना आत्मज्ञानं वा ब्रह्मज्ञानं वा भवितुं नार्हति । आत्मज्ञानेन ब्रह्मज्ञानेन वा विना आत्यन्तिकदुःखनिवृत्ति एवं मोक्षमवाप्नोतुम्, न शक्नोति । अतएव वेदं सत्यवती नन्दन भगवान्- बादरायणः व्यासः चतुर्षु भागेषु व्यभजत् ।

क्रमशः चतुर्वेदानां पार्थक्येन अभवत् । चतुर्षु भागेषु विभक्तस्य वेदस्य अनेकाशाखा प्रवर्तायाश्च सम्भवतु प्राचीनकाले

वेदार्थस्य सुकरत्वं यथा स्यात् तदर्थम् अर्थबोद्धुं ऋषिभिः वेदाङ्गानि रचितानि । यतो हि मन्त्राणामर्थं परिज्ञाने विनियोगस्य देवतायाः छन्दसः ऋषेश्च ज्ञानं विना तदनुष्ठानं फलानुकूलं कृतं कर्म निष्फलं भवति । इमानि वेदाङ्गानि षट्सन्ति:-

शिक्षा, व्याकरणम् निरुक्तम्, कल्पः ज्योतिषं छन्दश्च ।

पाणिनीय शिक्षायाम् एतेषां वेदाङ्गत्वप्रतिपादनं स्पष्टीकृतं अस्ति ।

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुः निरुक्तं श्रोत्रमुच्यते ।।
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणम्स्मृतम् ।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ।

[पाणिनीय शिक्षा]

अस्मिन् पाणिनिशिक्षाश्लोके निरुक्तम् वेदपुरुषस्य श्रोत्ररूपमङ्गं मन्यते । निरुक्तस्य अध्ययनं विना मनुष्यः वेदविषये सतोऽपि बधिरो

बधिरः अस्ति । यथा बधिरस्य समक्षं स्वरतालादिभिः ललितस्य कस्यापि गीतस्य गानम् अरण्यरोदनमात्रम् अस्ति। तथैव येन पुरुषेण निरुक्तं ना धीतम् । तस्य पुरुषस्य समक्षं वेदमन्त्रस्य व्याख्यानमपि [illegible] अरण्यरोदन मात्रमेव भविष्यति । स तस्यार्थं पूर्णतया नावगन्तुं शक्नोति । आधिभौतिके जगति विचरन्पुरुषः प्रायः आधि-भौतिकैः संस्कारैः संस्कृतो भवति । स तेषां मन्त्राणामर्थं भौतिक दृष्ट्यैव विचारयितुमनुष्ठाय यत्नवान भवति । स नावगच्छति यत् वेद आधिदैविकानां आध्यात्मिकानामर्थानामपि विचारो अस्ति । समस्त वैदिक विज्ञानं देवतावादे आधारितम् अस्ति । का देवताः कियन्त्यः । तासां कानि स्वरूपाणि । चेतना अचेतना वा । तासां किं कर्तव्यम् इत्यादि विषयाणां ज्ञानं वेदार्थावगन्तुंपरमावश्यकं अस्ति । एतस्य विस्तरेण वर्णनं निरुक्तग्रन्थस्य अस्ति । अतः वेदार्थऽवगन्तुं निरुक्तस्या-ध्ययनं परमावश्यकम् । यास्कीय निरुक्तं निघण्टुग्रन्थस्य व्याख्या अस्ति । अयं निघण्टु ग्रन्थः पंचसु अध्यायेषु त्रिषु काण्डेषु च विभक्तः । आदिमाः त्रयो अध्यायाः नैघण्टुकं काण्डम् कथ्यते । चतुर्थो अध्यायः ऐकपदिकं नैगम-काण्डम् वा कथ्यते । सप्तमाध्यायात् आरभ्य चतुर्दशो अध्यायपर्यन्तं दैवतमिति ।

निरुक्तस्य व्युत्पत्तिः--

[1]अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तम् तन्निरुक्तम् निघण्टु शब्दस्य प्राचीनैः कोष इति संज्ञा दत्ता । अयं वैदिक शब्दानिघण्टु कोषः सर्वप्रथमं कोषग्रन्थेषु निघण्टुकोषः अस्ति । अस्मात् निघण्टुकोषग्रन्थात् प्राचीनः कश्चन नापरः कोषग्रन्थः अस्ति । अस्मिन् प्राचीन निघण्टुनामके कोषे संस्कृत भाषायाः शब्दानां चतुर्धा विभागः कृतः कथितो (क) नाम (ख) आख्यात (ग) उपसर्ग (घ) निपात । नामाख्यातोपसर्गनिपाताश्च ।

> क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् ।
> सत्त्वाभिधायकं नाम निपाताः पादपूरकाः ॥

एतेषाम् उदाहरणानि नाम- रामः कृष्णः, गोपालः, राघवः, आख्यातम् गच्छति भवति, याति, कुर्वन्ति इत्यादि ।

---

1. निरु. भूमिका, पृ. 17.

उपसर्ग- प्र, परा, अप, सम, इत्यादि निपात- च, वा, ह इत्यादयः ।

वेदा वैदिक संस्कृतभाषायामेव सन्ति । वैदिकशब्दानामेव संस्काराः अपि सन्ति लिङ्.कृत्तद्धितसमासाः शब्दगणम् इति शुक्ल यजुः प्रातिशाख्यम् सूत्रम् । नामाख्यातादयः अपि बहु अन्तर्हिताः सन्ति अतिपरोक्षवृत्तीनां शब्दानां मन्त्रोदाहरणपूर्वकं यास्कीये निरुक्ते अस्ति । केषां अतिपरोक्षवृत्तीनां वैदिकशब्दानां कृच्छ्रवृत्तीनां शब्दानां संग्रहः ऋग्वेदीय मन्त्रतः क्रियते । अत्र शुक्लयजुः वाजसनेय मन्त्रसंहितायाः कृच्छ्रान् मन्त्रशब्दान् अनवगतसंस्कारान् संगृह्य तदर्थावबोधं शब्द व्युत्पत्तिमन्त्रव्याख्यादि द्वारा प्रयत्नः विधीयते । तदिदं शोधस्य मुख्यम् रहस्यम् । अतिपरोक्ष कृच्छ्र मन्त्र शब्दार्थ ज्ञानायदेव शास्त्रम् प्रवर्तते । अतएवाह- अस्य शास्त्रस्य नाम भाषा विज्ञानमपि । महर्षि यास्कः वैदिक निघण्टु शब्दानामेव स्वनिर्वचन शास्त्रस्याधिकरणे वैदिक निघण्टु शब्दकोषः एव मन्यते । निघण्टुः वैदिक शब्दानामेव संग्रहः अस्ति । वेदार्थज्ञानाय एव निरुक्तशास्त्रं प्रवर्तते ।

## विषयानुक्रमणिका

## अथ प्रथमोऽध्यायः

अतिपरोक्षादिशब्दानां संग्रहः

1. अध्वरः
2. अनमीवाः
3. मातरिश्वनः
4. इन्द्रायाहि
5. सुवाकामदुघः
6. आतनद्मि
7. इदमहमनृतात्
8. कस्त्वायुनक्ति
9. प्रत्युष्टम् रक्षः
10. धूरसि
11. जुष्टम्
12. अदित्या उपस्थ
13. सुधातुम्
14. देवयुवम्
15. पराजघ्नुः
16. देववीतये

17. सुशमि समोद्ध
18. हिरण्यपाणिः
19. देवायजंवः
20. ब्रह्मवर्तित्वा
21. अग्नेब्रह्म गृभ्णीष्व
22. धिरतः स्थोर्ध्वधिस्तो
23. महीनां पयोसि
24. संवपामि
25. मधुमतीभिः
26. धर्मिण्ठेऽधिनाके
27. संविश्याः
28. सहस्रभृष्टिं शतोर्वां
29. धोर्वधान
30. अपारक्ष
31. दिस्टयो जीवदानुं
32. धीरासः
33. स्वाधाभिः
34. प्रोक्षाणीरासादय
35. अग्निशितोऽसि
36. वाजेध्याये
37. अग्निर्जिह्वा सुहूः

38. कृष्णोऽस्याखरेष्ठः

39. उर्णम्रदसं स्तृणामि

40. विश्वावसुः

41. विश्वस्मादिषद्ये

42. वीतिहोत्रम्

43. कस्याश्चिदभिशस्त्यै

44. स्वासस्थम्

45. घृताच्यसि जुहूर्नाम्ना

46. वाजजितम्

47. सरिष्यन्तम्

48. छायामुपच्छेदो

49. अग्नीषाद

50. मनोजूतिः

51. प्रवेद प्रोहामि

52. दिवः तमनुवृतताम्

53. संजानाथाम्

54. वृष्णोर्गच्छ

55. वृष्टिर्भूत्वा दिवं गच्छ

56. अग्नेः प्रियं पाथोऽपीतम्

57. संस्रवभागास्थ

58. स्वाहा वाट

59. घृताचीस्थः

60. अग्नेऽक्षायुः

61. सुषदायोनौ

62. सुदत्तः

63. संतनूभिरगन्महि

64. स्वयंभूरसि

65. सप्तहोतारः

66. वैदिका दः

67. कुमारं पुष्करस्रजम्

68. जुहोतन

69. जातवेदसः

70. यविष्ठ्य

71. सुसन्दृशमिवः

72. प्रयन्त्यः

73. रोचना

74. स्वस्वन् महिषः

75. पतङ्गायधीयते

76. यमप्नवानः

77. दिवोदिवे

78. रेवतीरमदन्

79. वा अभगात

80. संहितासि विश्वरूपम्

81. दिवे दिवे रोचमानः

## अथ द्वितीयोऽध्यायः

### अनुबन्ध चतुष्टयविचारः

तद् यान्येतानि चत्वारि पदजातानि, नामाख्यातोपसर्ग-निपाताश्च, तानीमानि भवन्ति ।

तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति । भावप्रधानमाख्यातोपसर्गे षु, सत्त्वप्रधानानि नामानि ।

तद् यत्रोभे भावप्रधाने भवतः ।

अत्र पुनर्यत्रैते उभे भवतो वाक्ये । तत्र आख्यातं प्रधानं, गुणभूतं नाम । एवं तावदाख्यातं वाक्ये प्रधानमिति कथितम् ।

पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति-पचतीत्युपक्रमप्रभृत्य पवर्गपर्यन्तम् ।

पूर्वापरीभूतं- पूर्वापरमिव पौर्वापर्येणावस्थितमेकमनेकासु क्रियासु आश्रितम् उपक्रमप्रभृतीति । उपक्रमः- आरम्भस्तस्मादारभ्या-पवर्गपर्यन्तं यावदन्त्या क्रियेत्यर्थः ।

क्रियासु बह्वीष्वभिसंश्रितो यः पूर्वापरीभूत इवैक एव ।
क्रियाभिनिर्वृत्तिवशेन सिद्ध आख्यातशब्देन तमर्थमाहुः ॥

मूर्तं सत्त्वभूतं –सत्त्वरूपिणं, लिङ्. गसंख्यायुक्तैः सत्त्वनामभिराचष्टे । यथा व्रज्या पक्तिरिति । व्रज्या–व्रजनम् । पक्तिः पचनम् ।

1. सत्त्वोपदेशनिरूपणम् 1.

अदइति सत्त्वानामुपदेशः ।

गौरश्वः पुरुषो हस्तीति ।

अयं गवादिः सत्त्वानां विशेषोपदेश इत्यर्थः ।

भवतीति भावस्य ।

आस्ते, शेते, व्रजति, तिष्ठतीति ।

---

1. निरु. अ. 1 पृ. 5.

इन्द्रिये नित्यं वचनमौदुम्बरायणः । तत्र चतुष्ट्वं नोपपद्यते ।

इन्द्र आत्मा, स येन- दृश्यते -लिङ्.गयते- अनुमीयते,च तदिन्द्रियम् । तस्मिन्निन्द्रिये यावत्तिष्ठति तावद् नित्यं वचनमिति, औदुम्बरायण आचार्यो मन्यत इति शेषः ।

अयुगपदुत्पन्नानां वा शब्दानामितरेतरोपदेशः ।

येषामयुगपदुत्पन्नानां शब्दानां वाक्यावयवभूतानां यो ऽयमितरेतरोपदेशः । इतरेतरगुणप्रधानभावो नाम्न आख्यातं प्रति गुणभावेनोपदेशः आख्यातस्य च नाम प्रति प्रधानभावेनोपदेशः अयं च नोपपद्यते इत्यनुवर्तन्ते।

शास्त्रकृतोयोगश्च[1]

यश्चायं शास्त्रकृतो योगः शब्दस्य शब्दान्तरेण योगः । तथा- उपसर्गस्य धातुना, धातोः प्रत्ययेन, प्रत्ययस्य लोपागमवर्ण विकारैः । अयं च वचनानित्यत्वात्तन्नोपपद्यते । विनष्टाविनष्टयोः परस्परं योगाभावात् ।

---

1. निरु. अ. 1, पृ. 6.

व्याप्तिमत्त्वात् तु शब्दस्य ।

व्यापनं व्याप्तिः सा यस्मिन्नस्ति स व्याप्तिमान तद्भावो व्याप्तिमत्त्वं नित्यत्वं । तस्मात् व्याप्तिमत्त्वाच्छब्दस्य पदचतुष्टयादि सर्वमुपपन्न एव । व्याप्तिमत्त्वादित्यनेनैवेतरेतरोपदेशः प्रयुक्तः शास्त्रकृतो योगश्च ।

अणीयस्त्वाच्च शब्देन संज्ञाकरणं व्यवहारार्थं लोके व्याप्तिमन्तः, पाणिविहाराक्षिनिकोचादयः, तैरेव कार्यं सिध्येदिति स्यादिति । तत्पुन अभिनया अपि व्याप्तिमन्तः नत्वणीयांसः ते महता यत्नेन व्याप्नुवन्ति, न च निःसन्दिग्धं कार्यं कुर्वन्ति ।

तस्मादणीयस्त्वादिति विशेषहेतूपपत्त्या शब्देनैव संज्ञा संकेतलक्षणं व्यवहारार्थं लोके लाघवात् सति लाघवे गौरवं केनाद्रियते ।

तेषां मनुष्यवद्देवताभिधानम् ।

यथैव हि मनुष्याः प्रयोजनेषु नामाख्यातोपसर्गनिपातैर्यथार्थमभिव्यवहरन्ति । एवमेव देवा अपि ।

पुरुषविद्याऽनित्यत्वात्कर्मसम्पत्तिर्मन्त्रो वेदे यतो वा पुरुषेषु-मनुष्येषु विद्यायाः विज्ञानस्यानित्यत्वात् विस्मरणेन कर्मसम्पत्तिः न स्यात्, अविगुणकर्मफलसम्पत्तिः, मोक्ष इत्येवमर्थं वेदे मन्त्राः समाम्नाता इति वाक्यशेषः ।

षड्भावविकाराः भवन्तीति वार्ष्यायणिः – जायते, अस्ति विपरिणमते, वर्धते, अपक्षीयते, विनश्यतीति । जायत इति पूर्वभावस्यादिमाचष्टे, नापरभावमाचष्टे, न प्रतिषेधति ।

अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणम् । अस्तीति जातस्य सत्त्वस्यावधारणमात्रं ब्रवीति, न विपरिणाममाचष्टे-अपूर्णत्वात् । न प्रतिषेधत्युपस्थितत्वात् ।

विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारम् । विपरिणमत इत्येष शब्दोऽप्रच्यवमानस्य तत्त्वादप्रच्यवमानस्य विकारं विक्रियामात्रं ब्रवीति । न वृद्धेर्धर्ममाचष्टे ।

वर्धत इति स्वाङ्गाभ्युच्चयं सांयौगिकानां वार्थानाम्-वर्धते विजयेनेति वा वर्धते शरीरेणेति वा ।

वर्धते इत्येव शब्दः, स्वेषामङ्गानां- शिरोग्रीवाबाहूदरादीनां सांयौगिकानां वा हिरण्यधान्यादीनां, अभ्युच्चयमाह । वर्धते-विजयेनेति सांयौगिकेषु उदाहरणम् । वर्धते शरीरेणेति स्वाङ्गानाम्युच्चये । अपक्षीयते इत्येतेनैव व्याख्यातः प्रतिलोमम् ।

यथैव हि स्वाङ्गैः सांयौगिकैर्वा प्रत्येकमुपचीयते- तथैवापक्षीयते ।

विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति ।

अतोऽन्ये भाव विकारा एतेषामेवविकारा भवन्तीति - ह स्माह ।[1]

अतो भावविकारषट्कादन्यत्वेन भावविकारा गद्यन्ते न ते पृथक् सन्ति । किंतर्हि एतेषामेव विकारा भवन्ति । तथा- जनिशब्दवाच्यो निष्पद्यतेऽभिव्यज्यते । अस्ति शब्द वाच्योऽस्ति, विद्यते, भवतीत्येवमादि । विपरिणमति शब्दवाच्यो विपरिणमते, जीर्यति । वर्धति शब्द वाच्यो वर्धते, पुष्यति, उपचीयते, अपक्षीयतिशब्द वाच्यो विनश्यति, म्रियते,

---

1. निरु. अ. 1, पृ. 10.

विनियत इत्येवमादि । इति स्माख्यार्था पणिरित्यनुवर्तते इत्याद्यूहा- वेचादित्यर्थः ।

ते यथा वचनमभ्यूहितव्याः ।

ते अन्यादिशब्द वाच्या विकाराः, यथावचनमवस्थिताः सन्तः प्रकरणोपक्रान्तस्यार्थमभ्यूहितव्या ज्ञातव्या इत्यर्थः ।

न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः ।

उपसर्गाः प्रपराद्यः, निर्बद्धा निष्कृष्य- नामाख्यात मध्यात् बद्धाः पदव्यवच्छेदेन विरचिताः सन्तो नार्थान्निराहुरिति शाकटायनाचार्यः मन्यत इति शेषः ।

नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति ।

नामाख्यातयोरर्थं उपसर्गसंयोगे सति द्योत्यते । नामाख्यात वियोगे तेषामर्थाभिधानशक्तिर्नास्तीति भावः । अयमुपसर्गाणां द्योतकत्व पक्षः ।

पच्चावचाः पदार्थाः भवन्तीति गार्ग्यः ।

उच्चावचाः बहुप्रकाराः पदानामर्थाः पदार्थाः भवन्ति वियुक्तानामपि नामाख्याताभ्यामिति गार्ग्य आचार्यो मन्यत इति ।

तद् य एषु पदार्थः प्राहुरिमे तं नामाख्यातयोरर्थ विकरणम् ।

य एषूपसर्गेषु स्थितोऽनेकप्रकारोऽर्थः प्राहुरेव तमिमे उपसर्गाः पृथगपि सन्तः । नामाख्यातयोरर्थविकरणम् – अर्थविक्रियामित्यर्थः । तस्मादर्थवन्त उपसर्गा इति शाकटायनपक्षः ।

आ इत्यर्वागर्थे ।

यथा आपर्वतात् पर्वतस्य पूर्व
प्रपरेत्यस्य प्रातिलोम्यम् ।

प्रपरा इत्येतावुपसर्गावेतस्य आङोऽर्थस्य प्रातिलोम्यमाहतुः ।
यथा प्रगतः परागतः ।

अभीत्याभिमुख्यम् ।

अभिगतः । प्रतीत्येतस्य प्रातिलोम्यम् ।

अपि तु इत्यभिमुखितार्थेप्रयुक्तः ।

यथा अतिधनः, दुर्ब्राह्मण इति ।

निर्दुरित्येतयोः प्रातिलोम्यम् । यथा- निर्धनः, दुर्ब्राह्मण इति

~~उदित्येतयोः प्रातिलोम्यम्~~ ।

न्यवेति विनिग्रहार्थायौ ।

यथा-निगृह्णाति । अवगृह्णाति इति

उदित्येतयोः प्रातिलोम्यम् ।

उदितिस्वयोः द्वयोः प्रातिलोम्यमात् । उदगृह्णाति इति उत्थापयतीतिवा

तमित्येकीभावम् ।

संगृह्णाति इति संग्रहकरोतीत्यर्थः ।

व्यपेत्येतस्य प्रातिलोम्यम् ।

विगृह्णाति । अपगृह्णातिवृ्यकरोतीत्यर्थः ।

अन्विति सादृश्यापरभावम् ।

अनुरूपगन्धेदमिति सादृश्यम् । अनुगच्छतीत्यपरभावः

इत्यादि उपसर्गाः ।

## निपात लक्षण निरूपणम् ।

अथ निपाताः ।

उच्चावचेष्वर्थेषु निपतन्ति ।

उच्चावचेष्वनेकप्रकारेष्वर्थेषु निपतन्तीति निपाताः ।

अप्युपमार्थेऽपि कर्मोपसंग्रहार्थेऽपि पदपूरणाः ।

तेषामेते चत्वार उपमार्थे भवन्ति ।

तथा- सर्वेषां, मध्ये एते एव चत्वारः- इव, न, चित् नु च उपमार्थे भवन्ति ।

इवेति भाषायां च ।

उपमार्थकः लोके ।

अन्वध्यायं अग्निरिवेन्द्र इवेति ।

छन्दसि चेत्यर्थः । उदाहरति- अग्निरिवेन्द्र इवेति । तत्र पूर्वो मन्युर्नाम, तस्येदमार्षम् ।" अग्निरिव मन्यो त्विषितः सहस्व" । हे मन्यो अग्निरिव त्विषितो दीप्ततरस्त्वं तेजसा सहस्व, अभिभवास्मच्छत्रून् । भाषायां-अग्निरिव तीक्ष्णः, इन्द्रइव विक्रान्त ।

## नेति प्रतिषेधार्थीयो भाषायाम्

प्रतिषेधः अर्थः प्रयोजनं यस्य प्रतिषेधार्थः । प्रतिषेधार्थ एव प्रतिषेधार्थीयः एवं विचिकित्सार्थीय इत्यादावपि ।

उभयमन्वध्यायम् ।

चिदित्येषोऽनेककर्मा ।

आचार्यश्चिदिदं ब्रूयात् इति पूजायाम् । आचार्यः कस्मात् आचार्यः आचारं ग्राहयति, आचिनोत्यर्थान्, आचिनोति बुद्धि मितिवा ।

---

## अथ तृतीयोऽध्यायः

### "कस्मैविद्या देयेति नैरुक्तो विचारः"[1]

नैरुक्त मत्या वर्ज्य शिष्य निरूपणम्[1]

नावैयाकरणाय, नानुपसन्नाय, अनिदंविदे वा ।

यः व्याकरणशास्त्रं नाऽधीतः तेषां कृते इयं विद्या न दातव्या । यः शिष्यभावेन् नाऽऽगतः तेषां कृते एव न दातव्यः । अनिदंविदे वा- यो अयोग्यतावशात् निरुक्त शास्त्रे ज्ञान हीनाः सन्ति । तेभ्यो अपि नैव दातव्यम् विद्या ।

नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया ।

यो हि न विजानाति स आत्मीयं दोषमाचार्यं एवासृजति ।

ग्राह्य शिष्य निरूपणम्[2]

उपसन्नाय तु निर्ब्रूयाद्यो वालं विज्ञातुं स्यान्मेधाविने तपस्विने वा ।

---

1. निरु. अ.2, पृ. 71.
2. निरु. अ.2, पृ. 72.

यः मेधावी प्रज्ञायुक्तः यो वा तपस्वी ताभ्यामपि निर्ब्रूयादेव ।

उक्तंच:-

"विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम् ।

विद्या किल वाग्रूपिणी भूत्वा ब्राह्मणं वेदाजगाम ।

प्रह्वीभूतोवाचच च गोपाय मा रक्ष माम । ततस्तेऽहं शेवधिः भविष्यामि । सुखनिधानमित्यर्थः । यः खलु छात्रः असूयकः पराधवादशीलः । अनुजुः कुट स्वभावः । अयतः अशुचिः । तस्मै एवं लक्षणाय न मां ब्रूयास्त्वम् । एवं सत्यहं तव निधिः स्याम् -भवेयमित्यर्थः ।

"य आतृणत्यवितथेन कर्णावदुःखं कुर्वन्नमृतंसम्प्रयच्छन् ।

तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत् कतमच्चनाह ।।

अधुना शिष्योपदेशमाह- यो गुरुः, अवितथेन- सत्येन ब्रह्मणा वेदेन अदुःखं कुर्वन्नमृतं- ज्ञानं सम्प्रयच्छति ददाति, तं गुरुं पितरं मातरं च जानीत ,

उक्तं च :-

उत्पादक ब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ।

ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ।।[1]

तस्मै मातपितृ भ्रात्र गुरवे न द्रुह्येत द्रोहो नैष्कार्यः ।

"अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा ।
यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत ।।"

<u>भावार्थः</u>-

अधुना दुष्टशिष्यान् अभिशापन्तो विद्या वदमाह । अध्यापिता ये छात्रा गुरुं प्रति नाद्रियन्ते-आदरं न कुर्वन्ति । वाचा मनसा कर्मणा वा, यथैव ते गुरोर्भोजनीयाः कृपापात्राणि, न भवन्ति तथैव तान्- दुष्ट शिष्यान् शास्त्रमपि पठितुं न भुनक्ति फलेन न संयुनक्तीत्यर्थः ।

"यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् ।
यस्ते न द्रुह्येत् कतमच्च नाह तस्मै मा ब्रूया निधिपाय ब्रह्मन् ।।

---

1. म. सं. 2.146.

<u>अर्थ</u>

हे ब्रह्मन् त्वं यमेव विद्यार्थिनं विद्याः –जानीयाः शुचिं – पवित्रं, अप्रमत्तम्– प्रमादरहितं, मेधाविनम्–ऊहापोहकुशलं, ब्रह्मचर्योपपन्नम्– जितेन्द्रियं किंच यः छात्रः ,ते– तुभ्यं न द्रुह्येत्– न द्रोहमुपगच्छेत् । कतमच्च–कदाचिदपि, तस्मै मा ब्रूयाः, निधिपाय– मम गोप्त्रे ।

इति–

—

## चतुर्थोऽध्यायः

### " अतिपरोक्षशब्दानां धातुत्वादिना प्रत्यक्षार्थ सम्पादनम् "

[1] "अघ्न्या"

हन धातोः " वधार्थे प्रयुक्तः

हन्तुं योग्या घ्न्या, हन्तुम् अयोग्या अघ्न्या इति ।

[2] "अनमीवाः"

"अम रोगे" धातोः

अनमीवाः रोग रहिताः अमीवाः रोगिणः ।

[3] "मातरिश्वनः"

मातरिश्वा वायुः कथ्यते ।

[4] "ह्वर्षित्"

ह्वृ धातोः कौटिल्यार्थे

ह्वार्षित् कुटिलो मा भूत् ।

[5] "सुप्वारकमयुक्षः"

सुष्ठु पुनातीति सुपूः तेन सुप्वा ।

[6] "आतनच्मि"

आपूर्वक तंच धातोः कठिनीकरणार्थः ।

[7] "देवयुवम्"

"यु मिश्रणेधातोः"

देवान् मिश्र यति वह्निना मिश्रीकरोति देवयुवम् तम्

दवयुवम् ।

"देवयजम्"

देवाः इज्यन्ते यस्मिन् असौ देवयाट तम् देवयजम्

देवयजमङ्गारम् कपालेना छादयेत् ।

"ब्रह्मवनित्वा"

वन् षण संभक्तौ"

पुरोडाश निष्पत्यर्थ स्वीक्रियते इति ब्रह्म याचे ।

"संवपामि"

सम् पूर्वक वप् धातोः

स्थापामि पाशयां सम्यक् धिपामि ।

विष्ट संस्थनीया आप उपसर्जन्यः ता अग्नीदानयेत अध्वर्युः परिमार्ष्यां प्रतिगृह्णीयात ।

अनिशितो-सि

"शो धातोः तनूकरणे

नितरां शितस्तीक्ष्णो कृतो निशितस्तथा न भवति इति अनिशितः भवति ।

वाजेध्यायै

"ञिइन्धी दीप्तौ" इन्धनं इध्या दीप्तिः । वाजस्येध्या वाजेध्या तस्यै वाजेध्यायै ।

"विश्वस्या रिष्ट्यै"

"रिष हिंसायाम् रेषणं रिष्टिः न रिष्टिः अरिष्टिस्तस्यै विश्वस्यारिष्ट्यै । आसादनीयस्थानरूपस्य विश्वस्य हिंसापरिहाराय ।

"अरन्ता:

रा दाने इति धातोः क्वसुन्नन्तस्य बहुवचने ररुषः इति दानं कृतवत इत्यर्थः ।

"धूर्तिः"

धूर्ति हिंसां कर्तुं पतितः ।
शत्रुकृता हिंसा मा प्राप्नोति इत्यर्थः ।

"आयच्छस्व"

दाण् दाने धातोः पा. सूत्रेण यच्छादेशः
आयच्छस्व आगमय यशो धनं च अस्मभ्यं देहि ।

"अप्रयुच्छन्"

"युच्छ प्रमादे" अप्रमाद्यन् इति भावः ।

"उशन्तम्"

उशन् "वश कान्तौ" अहं कामयमानः । किं भूतं
उरुम् उशन्तम् सोमं कामयमानः स्योनमुपवेशं सुख करम् ।

"गयस्फान"

गय इति गृह नाम "स्फायी वृद्धौ" गयान्स्फायतीति
गयस्फानः गृहाभिवर्धकः ।

"जुहुराणम्"

"हुर्छा कौटिल्ये" हुर्छितुं कुटिलो कर्तुमिच्छतीति जुहुराणम् ।

" तितिजानः"

"तिज निशाने छेदान्नमेतस्य इति भावः ।

"धिषणा"

"धियं सन्वन्ति ददाति धिषणा " षणु दाने "
तनादिः ।

" मादयस्व"

हर्षयस्वात्मानम् यद्वा "मदि/मद तृप्यस्व "मद तृप्तौ"
चुरादिरात्मनेपदी

" सजोषा"

सजोषा " जुषी प्रीतिसेवनयोः जोषणं जोषः प्रीतिः ।

" पुरुराणः"

फलं राति ददाति इति भावः ।

## पंचमेऽध्याये

### शुक्ल यजुषः कठिनशब्दानां यास्कीय प्रक्रियया अर्थोपपादनम्

हरिः ॐ । इषे त्वोर्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या इन्द्राय भागं प्रजावतीरनमीवा XXY- अयक्ष्मा मा व स्तेन ईशत माघशंसो ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्य- जमानस्य पशून्पाहि ॥

1. शब्द – "अघ्न्याः" मं. संख्या । अध्यायः । [मं.]" इषेत्वोर्जेत्वा- वायवस्थः इति" ।

व्याख्या-

हे अघ्न्याः गावः, गोवधस्योपपातकरूपत्वात् हन्तुं अयोग्या अघ्न्या उच्यन्ते ।

अथ मन्त्रार्थः क्रियापदाध्याहारेण । हे शाखे, इषे वृष्ट्यै त्वा त्वां छिनद्मि । इष्यते काङ्क्ष्यते सर्वैर्व्रीह्यादिधान्यनिष्पत्तये सा इट् । वृष्ट्या वृष्टिरूपविशेषता । कर्मणि क्विप् ।" "वृष्ट्यै तदाह यदाहेषे त्वा"[1]

---

1. शु.यजु. .1.7.1.2.

इति श्रुतेः । "पर्णशाखां छिनत्ति शमीशाखां वेषे त्वोर्जे त्वेति वा छिनद्मि इति वोत्तमेः साकाङ्क्षत्वात्सन्नमयामीति वोत्तर"। इति कात्यायनोक्तेः छिनद्मीति क्रियापदमध्याहर्तव्यम् । कात्यायनसूत्रस्यायमर्थः- पर्णशाखा शमीशाखा वात्र विकल्पिता । तच्छेदने इषे त्वोर्जे त्वेति द्वौ मन्त्रौ विकल्पितौ । तयोः क्रिया पदाकाङ्क्षत्वादर्थाविबोधाय छिनद्मि इति पदमध्याहर्तव्यमित्येकः पक्ष । इषे त्वेति छेदनार्थो मन्त्रः । ऊर्जे त्वेति संनमनार्थः । संनमनं ऋजुकरणं शाखालग्नधूल्याद्यपनयनम् । इदं पक्षान्तरमित्यर्थः । ऊर्जे त्वा । शाखैव देवता । हे शाखे, त्वा त्वां संनमयामि ऋजुकरोमि । किमर्थम् । ऊर्जे "ऊर्ज बलप्राणनयोः" । ऊर्जति सर्वान्मनुष्यपश्वादीन्बलयति पानादिनां दृढशरीरान्करोति । यद्वा । प्राणयति पुरुषेण चेष्टयतीति व्युत्पत्तिद्वयेन वृष्टिगतो जलात्मको रस ऊर्जशब्देनोच्यते । तस्मै रसाय त्वामनुमार्ज्मि ।"यो वृष्टादूर्ग्रसो जायते तस्मै तदाह"[1.7.1.2.] इति श्रुतेः । एतन्मन्त्रद्वयपाठेनाध्वर्युरिषमा-यमन्नं बलकरमाज्यक्षीरादिरसं च यजमाने संपादयत्येव । "इषे त्वोर्जे त्वेत्याहेषमेवोर्जं यजमाने दधाति" इति तित्तिरिवचनात् । कात्यायनः "मातृभिर्वत्सान्संसृज्य वत्सं शाखयोपस्पृशति वायवः स्थ"[4.2.7] इति वायुर्देवता । "वा गतिगन्धनयोः" । वान्ति प्र गच्छन्तीति वायवो गन्तारः । हे वत्साः, यूयं वायवः स्थ मातृभ्यः सकाशादन्यत्र गन्तारो भवत । मातृभिः सह गमने सति सायं दोहो न लभ्यत इत्यभिप्रायः ।

यदा । वायु सादृश्याद्वत्सानां वायुत्वम् । यथा वायुः पादप्रक्षालननि-ष्ठीवनादिभिरपवित्रां भूमिं शोधयित्वा पुनाति, एवं वत्सा अप्यनुष्ठानहेतुभूतगोमयादिदानेन भूमिं पुनन्ति तस्माद्वायुसादृश्यम् । अथवा नृणां यथा स्वनिवासाय गृहनिर्माणमावश्यकमस्ति एवं पशूनां तदभावान्निराव-रणेऽन्तरिक्षे संचरणादन्तरिक्षमेव पशूनां देवता । तस्यान्तरिक्षस्य वायुरधि-पतिः । स च वायुः स्वावयवैरिव पशून्पालयतीति पशूनां वायुरूपत्वम् । तथा पालनाय पशून्वायवे समर्पयितुं वायुरूपत्वमापाद्य वायवः स्थेति मन्त्र प्रवृत्ति । तदुक्तं तित्तिरिणा "वायवः स्थेत्याह वायुर्वा अन्तरिक्षस्या-ध्यक्षोऽन्तरिक्षदेवत्याः खलु पशवो वायव एवैनान्परिददाति" इति । यद्वा तृणभक्षणायाहनि तत्र तत्रारण्ये चरित्वा सायंकाले वायुवेगेन यजमानगृहे समागमनाय पशून्प्रवर्तयितुं वायुरूपत्वमुच्यते । कात्यायनः "देवो व इति मातृणामेकां उपाकृत्यैन्द्रं भवति माहेन्द्रं वा" [4.2.9.10] इति । अस्यार्थः । पूर्वसूत्राच्छाखयोपस्पृशतीति पदद्वयमनुवर्तते । वत्सानां मातरो या गावः सन्ति तासां मध्ये एकां गां उपाकृत्य पृथक्कृत्य देवो व इति मन्त्रेण शाखयोपस्पृशेत् । तथा सति गोसंबन्धि दधिरूपं हविरैन्द्रं माहेन्द्रं वा भवतीति देवो व इति मन्त्रस्येन्द्रो देवता । "षू प्रेरणे" । सुवति स्वस्व-व्यापारे प्रेरयतीति सविता । देवः द्योतमानः परमेश्वरः । हे गावः,

यो युष्मान् प्रार्पयतु प्रकृष्टतृणोपेतं वनं गमयतु । किमर्थम् । श्रेष्ठतमाय कर्मणे । चतुर्विधं कर्म । अप्रशस्तम्, प्रशस्तं, श्रेष्ठम्, श्रेष्ठतमं चेति । लोकनिन्द्यं वधबन्धचौर्यादिकमप्रशस्तम् । लोकैः श्लाघनीयं बन्धुवर्गपोषणादिकं प्रशस्तम् । स्मृत्युक्तं वापीकूपतडागादिकं श्रेष्ठम् । वेदोक्तं यज्ञरूपं श्रेष्ठतममिति तल्लक्षणम् । "यज्ञो वै श्रेष्ठतमं कर्म" {1.7.1.5} इति श्रुतेः । हे अघ्न्याः गावः, गोवधस्यातिपातकरूपत्वादहन्तुमयोग्या अघ्न्या उच्यन्ते तथाविधा यूयमिन्द्राय भागं इन्द्रमुद्दिश्य संपादयितव्यमाज्यदधिपयोहेतु क्षीरम् । आप्यायध्वं समन्तात् वर्धध्वम् । सर्वास्वपि गोषु प्रभूतक्षीरं कुरुत । "ओप्यायी वृद्धौ" । यो युष्मानपहर्तुं स्तेनश्चौरो मा ईशत ईश्वरः समर्थो मा भूत् । अघशंसः अघेन तीव्रपापेन मरणादिना शंसो घातको व्याघ्रादिरपि मा ईशत वो हिंसको मा भूत् । कीदृशीर्युष्मान् । प्रजावतीः बहुवत्स्याः ।

2. <u>शब्दः</u>

"अनमीवाः"

<u>व्याख्या</u>-

अमीवा व्याधिः स नास्ति यासां ताः अनमीवाः कृमिदष्टत्वादिरूपरोगेण रहिताः ।

अनमीवाः इति अमीवा व्याधिः स नास्ति यासां ताः अनमीवाः कृमिदंष्ट्र्यादिस्वल्परोगरहिताः । अयक्ष्माः यक्ष्मा रोगराजः प्रबलरोगरहिताः । किं च यूयं गो पतौ गवां पुष्टमार्गे पत्यावस्मिन् यजमाने ध्रुवाः शाश्वतिकीः बह्वीर्बहुविधाः स्यात भवत । "यजमानस्य पशूनित्यग्न्यगारस्यान्यतरस्य पुरस्ताच्छाखामुपगूहति"[1] इति । हे पलाशशाखे, त्वमुन्नतप्रदेशे स्थित्वा प्रतीक्षमाणा सती यजमानस्य पशून् अरण्ये संचरतश्चौरव्याघ्रादिभयात् पाहि रक्ष । अनया रक्षिता गावो निरुपद्रवाः सत्यः सायं पुनरागच्छन्तीत्याशयः । यद्यप्यचेतना शाखा तथापि तदभिमानिनीं देवतामुद्दिश्यैवमुक्तम् । यथा शास्त्रज्ञा अचेतनेऽपि शालग्रामे शास्त्रबुद्ध्या विष्णुसंनिधिमभिप्रेत्य विष्णुं संबोध्य षोडशोपचारान्विदधत इत्युक्तं प्राक् ॥

---

1. का. 4.2.11.

वसोः पवित्रमसि द्यौरसि पृथिव्यसि मातरिश्वनो घर्मोऽसि विश्वधा असि । परमेण धाम्ना दृंहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत् ।

3. शब्दः

"मातरिश्वनो मन्त्र"

व्याख्या

मातरिश्वनः वायोः घर्मः दीपको अन्तरिक्षलोकोऽसि । मातरि-अन्तरिक्षे श्वसिति निश्वासवच्चेष्टां करोति इति मातरिश्वावायुः ।

वसोः पवित्रमिति पवित्रमस्यां करोति कुशौ निधाय[1] इति । वासयति कुटुम्बादिद्वारा स्थापयति विश्वमिति वसुः यज्ञः । "यज्ञो वै वसुर्यज्ञस्य पवित्रमसि" (1.7.1.9) इति श्रुतेः । यज्ञशब्देन तदीयहविर्द्रव्यरूपं क्षीरं लक्ष्यते । हे दर्भमय पवित्र, वसोः इन्द्रदेवताया निवासहेतोः पयसः शोधकं पवित्रं त्वं असि । अनेन मन्त्रेण पवित्रं कृत्वा पर्णशाखायां बध्नीयात् । द्वौ कुशौ, कुशत्रयं वा पवित्रमुच्यते । "द्यौरसीति स्थाल्यादानम् ।[1] इति । यस्यां स्थाल्यां क्षीरं प्रक्षेप्तव्यं तद्ग्रहणार्थोऽयं मन्त्रः ।

---

1. का. 4.2.19.

हे स्थालि, मृज्जलाभ्यां निष्पन्ना त्वं धरित्रि असि अतएव पृथिवीस्वरूपासि । पूर्वमन्त्रात्तद्रूपत्वमस्यामनुवर्तते । तथा पृथिव्यसि पृथिव्याः सकाशादुद्धृतया मृदा निष्पन्नत्वात्पृथिवीरूपत्वम् । "मातरिश्वन अधिश्रयति "[1] इति गार्हपत्यादुदीचोऽङ्गारान्निरूह्य तेषूखामधिश्रयति । हे उखे, "त्वं मातरिश्वनः वायोः घर्मः दीपकोऽन्तरिक्षलोकोऽसि । मातर्यन्तरिक्षे श्वसिति निश्वासवच्चेष्टां करोतीति मातरिश्वा वायुः । घर्मः । "घृ क्षरण दीप्त्योः" घर्मः दीपकः संचारस्थानप्रदानेन वायोर्दीपकोऽभिव्यञ्जकोऽन्तरिक्षलोकः । हे स्थालि, तवोदरेऽप्यन्तरिक्षरूपस्यावकाशस्य वायुसंचारस्य सद्भावात्त्वमपि वायोर्घर्मरूपासि । धरित्रि पृथिव्यसीति पूर्वमन्त्रे लोकद्वयरूपत्वमुखाया उक्तम् अत्र मातरिश्वनो घर्मोऽसीत्यन्तरिक्षलोकरूपत्वमुच्यते तस्मादेषां त्रयाणां लोकानां धारणात् एवं विश्वधा असि विश्वं दधातीति विश्वधाः विश्वधारणसमर्थासि लोकत्रयरूपत्वात् । किंच परमेण धाम्ना उत्तमेन बहुक्षीरधारणसामर्थ्यरूपेण तेजसा हे उखे, त्वं दृंहस्व दृढा भव । त्वन्निष्ठस्य क्षीरस्य गलनं वारयितुम् । अन्यथा भग्नायास्तव छिद्रेण क्षीरं गलेत् ।" "दृहि दृहि वृद्धौ" इति धातुर्वृद्ध्यर्थोऽपि वृद्ध्यर्थत्वादपि दार्ढ्ये सति भङ्गाभावेन चिरमवस्थानाद्दार्ढ्यनाम कालवृद्धिरेव भवति । किंच । हे उखे मा ह्वाः कुटिला मा भव ।

---

1. श. ६ 5. 2. 20.

4. <u>शब्द</u> :

"ह्वार्षीत्"

<u>व्याख्या:</u>

ह्वृ कौटिल्ये । यद्युखा कुटिला भवेत्तदानीमवाङ्मुखायां तस्यां तत्स्थं क्षीरं गलेत् । अतः क्षीरधारणाय दार्ढ्यमकौटिल्यं प्रार्थ्यते । किंच ते यज्ञपतिः त्वत्संबन्धी यजमानः मा ह्वार्षीत् कुटिलो मा भूत् । त्वन्निष्ठक्षीरस्कन्दनेनानुष्ठानविघ्न एव यजमानस्य कौटिल्यम् । तच्च त्वदीयेन दार्ढ्येन कौटिल्याभावेन च न भविष्यतीति प्रार्थ्यते ।

वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ।

5. <u>शब्दः</u> "सुप्वाकामधुक्षः"

<u>व्याख्या:</u>

सुष्ठु पुनातीति सुपूः तेन सुप्वा । कामधुक्षः इति प्रश्नः । एकस्यां गवि दुग्धायां दोग्धारं प्रत्यध्वर्युः पृच्छति हे दोग्धः, विश्वमानानां गवां मध्ये त्वं काम् गां --

सा विश्वायुः सा विश्वकर्मा सा विश्वधायाः । इन्द्रस्य त्वा भागं सोमेनातनच्मि विष्णो हव्यं रक्ष ।

6. <u>शब्दः</u>

"सोमेनातनच्मि"

मन्त्रार्थः

प्रोक्ते "सा विश्वायुरित्यादि [का. 5. 2. 25] इति पूर्वोक्त प्रश्नस्योत्तरे अमूं गामिति दोग्ध्रा प्रोक्ते सति सा विश्वा-युरिति मन्त्रेण दोग्धारं प्रत्यध्वर्युर्ब्रूयात् । या गौस्त्वया दुग्धा स्यात् सा पृष्टा सा विश्वायुः शब्देनाभिधेया । विश्वमायुर्यस्याः सा विश्वायुः यजमानस्य सम्पूर्णं आयुः प्रयच्छतीत्यर्थः । यथा प्रथमा गौः पृष्टा एवमितरे द्वितीय तृतीये । दोग्धा तूत्तरेऽमूमिति प्रोक्ते सा विश्वकर्मा सा विश्वधाया इति मन्त्राभ्यां क्रमेण तयोराशिषं ब्रूयात् । या द्वितीया गौस्त्वया पृष्टा सा विश्वकर्मा या तृतीया गौस्त्वया पृष्टा सा विश्वधायाः । "डुधाञ् धारण पोषणयोः" विश्वान्सर्वान्देवा-न्दधाति क्षीर दध्यादि हविर्दानेन पुष्णाति इति विश्वधायाः । असुन्प्रत्ययो निच्च । यद्वा धेट पाने । विश्वानिन्द्रादि देवान् क्षीरादिद्रव्यं धापयति पाययतीति विश्वधायाः । क्वथितं क्षीरमग्ने-श्रातस्य मन्त्रार्थे तत्र प्रातःकालीन होमावशिष्टेन दध्ना दधि निष्पत्त्यै आतञ्चनं कुर्यात् । हे द धि, इन्द्रस्य भागं त्वां सोमेन सोमवल्ली रसेन आतनच्मि दध्यर्थं कठिनी करोमि । तञ्चतिः कठिनीकरणार्थः । पयस्यद्रवनहेतुर्दधिरूपत्वादि भवनया तस्यैव सोमत्वं संपाद्यते । यथा कश्चित्पुत्रान्बन्धुत्वेन भावितो बन्धुर्भवति प्राति कूल्येन भावितः शत्रुश्च । तदुक्तं वशिष्ठेन" बन्धुत्वे भावितो बन्धुः परत्वे भावितः परः । विषामृतदृशैवेह स्थितिर्भावनिबन्धिनी । इति । भोज्यं वा विषत्वेन

आचितं शान्तिं करोति । अमृतत्वेन आचितं शीर्णं" मद बलहेतुर्भवति । तथात्र दधिशेषस्य भावनया सोमत्वम् । "सोदकेनापि दधात्यमुष्मयेन् विष्णो रक्षयमिति" (श०.४.२.३४) इति । हे विष्णो, इदं हव्यं घोरं रक्ष । सर्वत्र सृष्टौ पालने संहारे च ब्रह्मविष्णुमहेश्वरा अभिमानिन्यो देवताः अतो विष्णुं संबोध्य हविषो रक्षा प्रार्थ्यते ।

अधुक्षः दुग्धवान् असि ।

6. शब्दः

"आतनच्मि"

व्याख्या:

क्वथितं घोर अग्नेरुद्धृत्य मन्त्रोक्ते तत्र प्रातःकालीन होमावशिष्टेन दध्ना दधिनिष्पत्तये आतंचनम् कुर्यात् । हे घोर, इन्द्रस्य भागं त्वां सोमेन । सोमवल्लीरसेन आतनच्मि दध्यर्थं कठिनीकरोमि । तंचतिः कठिनीकरणार्थः ।

अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् ।
इदमहमनृतात्सत्यमुपैमि (5)

7. <u>शब्दः</u>

"इदमहमनृतात्"

<u>व्याख्या:</u>

इदमहम् । अहं यजमानोऽस्मादनृतात् मनुष्य जन्मनः उद्गत्य सत्यं देवता शरीरं उपैमि प्राप्नोमि सत्यमनुष्ठीयमान कर्मरूपेण प्रत्यक्षमिति मन्वान इदमिति विशिनष्टि । अनृतं मनुष्यजन्म शीघ्रविनाशित्वात् । यथा स्वप्न गजादयो बोधमात्रेण शीघ्रं निवर्तमाना अनृता उच्यन्ते । सत्यं देवजन्म बहुकाल स्थायित्वात् । यथा जागरण गजादयः । श्रुतिरपि "इदमहमनृतात्सत्यमुपैमि" (1.1.1.4) इति । तन्मनुष्येभ्यो देवा-नुपावर्तत इति । यद्वा लोकप्रसिद्धे एव सत्यानृते ग्राह्ये । नानृतं वदेदिति कर्मण्यनृतनिषेधात् । अनृतवदनदुष्कृत्यादहमिदं सत्यवदनमुपैमि । अत इदं सत्यवदनं कर्माङ्गत्वात्कर्मकाले पालनीयम् ।

कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति । कर्मणे वां वेषाय वाम् (6)

{8} शब्दः

"कस्त्वायुनक्ति"

व्याख्या:

अत्र मन्त्रं प्रयुञ्जानोऽध्वर्युरारम्भकर्मण्यात्मनः कर्तृत्वमपनीय प्रजापतेरेव कर्तृत्वं प्रश्नोत्तररूपाभ्यां मन्त्रवाक्याभ्यां प्रतिपादयति प्रणीतानामपां धारक हे पात्र, त्वां कः पुरुषो युनक्ति आहवनीयस्योत्तरभागे स्थापयति इति प्रश्नः । तच्छब्दः प्रसिद्धार्थवाची । सर्वेषु वेदेषु जगन्निर्वाहकत्वेन प्रसिद्धो यः प्रजापतिरस्ति सः एव परमेश्वरः हे पात्र त्वां युनक्ति इत्युत्तरम् । पुनरपि कस्मै प्रयोजनाय त्वां युनक्ति इति प्रश्नः । तस्मै प्रजापतये तत्प्रीत्यर्थं त्वा युनक्ति इत्युत्तरम् । सर्वकर्मापि परमेश्वरप्रीत्यर्थमनुष्ठेयानीति भगवद्गीतास्वर्जुनं प्रति भगवतोक्तम् "सर्वकर्माण्यपि सदा" {18.56} "ब्रह्मार्पणं" {4.24} इति च परिस्तीर्य द्वन्द्वशः पात्राण्यासाद्य शूर्पं चाग्निहोत्रहवणीं चादत्ते । "कर्मणे वामिति शूर्पाग्निहोत्रहवण्यावादाय" {का. 2.3.10} इति । कर्मणे हे अग्निहोत्रहवणि हे शूर्प, वां युवां कर्मार्थमहमाददे इति शेषः । वेषाय च । "विष्लृ व्याप्तौ" । धातु । वेषो व्याप्तिः । सूचितकर्मसु व्याप्त्यर्थं च वां युवामहमाददे । शकटेऽवस्थितानां व्रीहीणां हविरर्थं पृथक्करणं प्रोक्षणार्थोदकधारणमित्याद्योऽग्निहोत्रहवण्या व्यापाराः । व्रीहिनिर्वापधारणमुलूखले व्रीहिप्रक्षेपः पुनःकरण वेत्यादयः शूर्पव्यापाराः ।

प्रत्युष्ट रक्षः प्रत्युष्टा अरातयो निष्टप्त रक्षो निष्टप्ता अरातयः । उर्वन्तरिक्षमन्वेमि [7]

[9] शब्दः

[प्रत्युष्टम् रक्षः"

व्याख्या:

"प्रतपनं प्रत्युष्टं निष्टप्तमिति वा" [का. 2.3.11] इति रक्षः राक्षसजातिः । प्रत्युष्टं प्रत्येकं दग्धम् । "उष दाहे" । अनेनाग्नि-होत्रहवणीशूर्पयोः प्रतपनेनात्र स्थिता राक्षसा दग्धा इत्यर्थः । अरातयोऽपि प्रत्युष्टाः प्रत्येक दग्धाः ।"रा दाने"। हविषो दक्षिणाया वा दानं रातिः । रातेः प्रतिबन्धका अरातयस्तेऽपि दग्धाः । अन्यथा न यज्ञतायनमित्यर्थः । शूर्पादौ निगूढं रक्षो निष्टप्तं निःशेषेण तप्तं संतप्तम् । "तप संतापे" । अरातयश्च निष्टप्ताः। अनयोर्मन्त्रयोर्विकल्पः "गच्छत्युर्वन्तरिक्षम् [ का. 2.3.12] इति । उरू विस्तीर्णम् । अन्तरिक्षम् आकाशम् । अन्वेमि अनुसृत्य गच्छामि । गच्छतः पुरुषस्य पार्श्वयोरेव स्थितं रक्षोऽनेन मन्त्रेण निराक्रियत इत्याशयः [7]

धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्वय वयं धूर्वामः । देवानामसि वह्नितमम् सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् [8]

10. <u>शकट</u>

"धूरसि"

<u>व्याख्या</u>:

हे वहवे, त्वं धूरसि हिंसकोऽसि ।"तुर्वी थुर्वी दुर्वी धुर्वी हिंसार्थाः" धुर्वेः क्विप् । यतो धूरसि अतः धूर्वन्तं हिंसन्तं पाप्मानं धूर्व विनाशय । किं च यः राक्षसादिरभिचारेण अस्मान् धूर्वति हिंसितुमुद्यतः तमपि धूर्व विनाशय । यं च वयं धूर्वामः तमपि धूर्व । यजमानस्याहितं च रिपुं वय-मनुष्ठातारो धूर्वामो हिंसितुमुद्यतास्तमपि धूर्व विनाशय । शकटस्थिताभ्य-त्रिभणानिमित्तमपराधमपहर्तुमभ्यर्थाधारभूता शकटस्य धूरनेन मन्त्रेण स्पृश्यते देवानामित्युपस्तम्भनस्य पश्चाद्दोषात्" (का. 2.3.14) इति । शकटस्य दीर्घं काष्ठमीषा तदग्रस्य भूमिस्पर्शो मा भूदिति । तदाधारत्वेन स्थापितं काष्ठमुपस्तम्भनं तस्य पश्चाद्भागे तामीषां स्पृशेत् । देवानामसि । हे शकट, त्वं देवानां संबन्धि असि भवसि । किंभूतं वह्नितमम् "वह प्रापणे" । वहतीति वह्नि अतिशयेन वह्नि वह्नितमम् । व्रीहिरूपस्य हविषोऽति-शयेन प्रापकम् । तथा सस्नितमं "ष्णा शौचे" अति शयेन शुद्धम् ।"आदृगमहन (पा. 3.2.171) इत्यादिना किप्रत्ययः । यद्वा "ष्णै वेष्टने" । दाढर्यार्थं चर्मादिभिरतिशयेन वेष्टितम् । पप्रितमम् ।"प्रा पूरणे" व्रीहिभिरतिशयेन प्रियम् देवहूतमम् । ह्वेन स्पर्धायां शब्दे च" देवानामतिशयेनाह्वातृ । व्रीहिपूर्णं शकटं दृष्ट्वा देवा आहूता इव शीघ्रमागच्छन्ति ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् अग्नये जुष्टं गृह्णाम्यग्नीषोमाभ्यां जुष्टं गृह्णामि (10)

11. शब्दः

"जुष्टम्"

व्याख्या:

हे हवि, सवितुःदेवस्य प्रसवे प्रेरणे सति तेन प्रेरितोऽहम् अग्नये जुष्टं प्रियम् त्वां गृह्णामि अग्नीषोमाभ्यां व्यासवत देवताभ्यां च जुष्टंत्वा गृह्णामि । काभ्याम् । अश्विनोर्बाहुभ्याम् पूष्णो हस्ताभ्यां च । अंसमणिबन्धयोर्मध्यभागो दीर्घदण्डाकारो बाहुः । पंचाङ्गुलियुक्ताग्रभागो हस्तः । अश्विनौ हि देवानामध्वर्यू । पूषा हि देवानां भागधुक् । अतो ग्रहणसाधनयोः स्वबाह्वोरश्विबाहुभावना कार्या । हस्तयोस्तु पूषहस्तभावेति भावः । सर्वात्मकत्वाग्नेर्हविस्तादृशं मनुष्येण कथं ग्रहीतुं शक्यमिति सवित्रानुज्ञातोऽश्विबाहुभ्यां पूष्णो हस्ताभ्यां गृह्णामीत्यर्थः । किंच । "सत्यं देवा अनृतं मनुष्याः (1.1.2.17) इति श्रुतेः देवानां सत्यरूपत्वात्तदनुस्मृतिपूर्वकं हविर्ग्रहण कर्मपर्यवसायित्वात्सत्यं भवति । देवतास्मरणाभावे तु मनुष्याणामनृतरूपत्वात्तत्कृतमनुष्ठानं निष्फलत्वादनृतं भवतीति देवतास्मरणमित्यभिप्रायः । हविर्गृह्णन्तमध्वर्युं देवताः सेवन्ते मम नाम ग्रहीष्यतीति । अनामग्रहं हविषि गृहीते तासां मिथः कलहो भवे किंदं मदर्थमेव गृहीतमिति तत्कलहनिवृत्त्यर्थमग्नये जुष्टमग्नीषोमाभ्यां जुष्टमिति

देवतानिर्देशपूर्वकं हविर्ग्रहणमित्यपि प्रायः ।

भूताय त्वा नारातये स्वरभिविख्येषं दृ न्तां दुर्याः पृथि-
व्याम् । उर्वन्तरिक्षमन्वेमि पृथिव्यास्त्वा नाभौ सादयाम्यदित्या
उपस्थेऽग्ने हव्य  रक्ष ॥11॥

12. <u>शब्दः</u>

"अदित्या उपस्थ"

<u>व्याख्या:</u>

हे हविः, पृथिव्या नाभौ मध्ये त्वां सादयामि स्थापयामि स्थापयामि । तस्यैव व्याख्यानं अदित्या उपस्थ इति । उपस्थेऽङ्के । यथा सुप्तं बालं पुत्रं माता स्वाङ्के स्थापयति एवमिदं हविः अदित्या उपस्थे भूम्या अङ्के सादयामि । हे अग्ने, तव समीपे स्थापितमिदं हव्यं त्वं रक्ष । सुप्तं पुत्रमिव बाधकेभ्यः पालय ।

पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । देवीरापो अग्रेगुवो अग्रेपुवोऽग्र इमम यज्ञं नयताग्रे यज्ञपति   सुधातुं यज्ञपतिं देवयुवम् ॥12॥

13. शब्दः

"सुधातुम्"

व्याख्या:

सुधातुम् सुष्ठु दक्षिणादिना दधाति यज्ञं पुष्णातीति सुधातुस्तं यज्ञस्य पतिं पालयितारं । एवं यज्ञपति शब्दो यौगिकृ व्याख्येय एवं रूढ्या ।

14. शब्दः

"देवयुवम्"

व्याख्या:

"यु मिश्रणे" । देवान् यौति यज्ञादिना मिश्रीकरोति देवयुस्तम् विग्रह । "अनित्यमागमशासनम्" इति नुगभावः । यद्वा देवान् कामयते इति देवयुवस्तम् ।"इच्छुरिदंकामयमानः" निरु [6.31] इति यास्कोक्तेः ।

युष्मा इन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये प्रोक्षिताः स्थ । अग्नये त्वा जुष्टं प्रोक्षाम्यग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि । दैव्याय कर्मणे शुन्धध्वं देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामि ॥13॥

15. शब्दः

"पराजघ्नुः"

व्याख्या:

अशुद्धाः नीचजातयस्तक्षादयः वः युष्माकं संबन्धि यदङ्ग-पराजघ्नुः पराहतं कृतवन्तः । छेदनतक्षणादिकाले स्वकीयपदस्पर्शेनाशुचित्वं चक्रुः

अग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णामि बृहद्ग्रावासि वानस्पत्यः स इदं देवेभ्यो हविः शमीष्व सुशमि शमीष्व । हविष्कृदेहि हविष्कृदेहि ॥15॥

16. शब्दः

"देववीतये"

व्याख्या:

अपां प्रणयनकाले नियमितायाः यजमानवाचो हविरावपनकाले

विविक्तौ भवति । तस्मादिदं हविर्वाचो विसर्जनम् । अतः देववीतये देवानां तर्पणाय भक्षणाय त्वा त्वां । गृह्णामि आददामीत्यर्थः । बृहद्ग्रावेति मुसलमादत्ते [का. 2.4.11] इति । हे मुसल, त्वं यद्यपि वानस्पत्यः : काष्ठमयस्तथापि ग्रावासि दार्ढ्येन पाषाणसदृशोऽसि । तथा दीर्घत्वेन बृहन्महानसि । "स इदमित्यवहन्ति" [का. 2.4.12] इति । हे मुसल, त्वं देवेभ्यः अग्न्यादिदेवोपकारार्थम् । इदं हविर्व्रीह्यादिरूपं शमीष्व शमय । अवघातविरोधितुषापनयनेन शान्तं कुरु । तस्यैव पदस्य व्याख्यानम् सुशमि शमीष्व सुष्ठु शान्तं यथा भवति तथा शमीष्व शमय "शमु उपशमे" व्यत्य-येन शपो लुक् । "तुरुस्तुशम्यमः सार्वधातुके" [पा. 7.3.95] इति ईडागमः । शान्तिर्द्विविधा । बाह्यतुषापनयनाद्बाह्या । सा प्रथमावघातेन स्यात् अन्तःस्थितमालिन्यस्यापनयनादन्या । सा फलीकरणेन भवति । तां द्विविधां शान्तिसंस्कारं कुर्वित्यर्थः । हविष्कृदेहीति त्रिराह्वयति [का. 2.4.13] इति यजमानः पत्नी आग्नीध्रो वा यो व्रीहीनवहन्ति स संबोध्याहूयते । हे हविष्कृत् हविः करोतीति हविष्कृत् । एहि आगच्छ । त्रिवारमुक्त-मर्थं देवा मन्यन्त इति त्रिराह्वानम् ॥

कुक्कुटोऽसि मधुजिह्व इषमूर्जमावद त्वया वयं संघातं संघातं जेष्म वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्तु परापूतं रक्षः परापूता अरातयः । अपहतं रक्षो वायुर्वो विविनक्तु देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना ॥16॥

18. शब्दः

"हिरण्यपाणिः"

व्याख्या:

यागे प्रक्षेप समये भूमौ पतनं वा भूदिति सवितुर्महिमं प्रार्थ्यते । किं भूतः सविता हिरण्यपाणिः हिरण्ययुक्ताङ्गुलीयाद्याभरणयुक्तौ पाणिर्यस्य सः हिरण्यपाणिः । यदा दैत्यैः प्राशित्रप्रहारेण छिन्नौ सवितुः पाणिः देवैर्हिरण्यमयौ कृताविति सवितुर्हिरण्यपाणित्वमिति बह्वृचश्रुतौ कथा ।

धृष्टिरस्यपाग्ने अग्निमामादं जहि निष्क्रव्या-द सेधा देवयजं वह । ध्रुवमसि पृथिवीं दृं ह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्यु-पदधामि भ्रातृव्यस्य वधाय ॥17 ॥

19. शब्दः

"देवयजं वह"

व्याख्या:

हे गार्हपत्य, देवयजं देवानां यागयोग्यं तृतीयमङ्गारम्

आवह समीपमानय । देवा इज्यन्ते यस्मिन्नसौ देवयाट् तं देवयजम् । "कपालेनाच्छादयति ध्रुव मसि" [का. 4.2.27] इति । देवयजमङ्गारं कपालेनाच्छादयेत् । हे कपाल, त्वं ध्रुवमसि स्थिरं भवसि । अङ्गारोपरि वर्तमानमपि इतस्ततो न पतसि । पृथिवीं भूमिं दृढीकुरु । पुरोडाशपाकसमये त्वत्कृतव्यवधानेन भूमेर्दाहकृतं शैथिल्यं न भविष्यतीत्यर्थः । किंच त्वाम् उपदधामि अङ्गारे स्थापयामि । किमर्थं । भ्रातृव्यस्य शत्रुभूतस्य पाप्मनो वा वधाय हिंसार्थम् । "व्यन्सपत्ने" [पा. 4.1.145] इत्याद्युदात्तत्वाद्भ्रातृव्यशब्दः शत्रुवाची । किंभूतं त्वां । ब्रह्मवनि । "वन षण संभक्तौ" ब्रह्मणा ब्राह्मणेन वन्यते पुरोडाशनिष्पत्त्यर्थं स्वीक्रियते इति ब्रह्मवनि । तथा क्षत्रवनि सजातवनीति पदद्वयं योज्यम् । सजाताः समानकुले जाताः यजमानस्य ज्ञातयस्तैर्वन्यते इति [17]

20. <u>शब्दः</u>

"ब्रह्मवनित्वा"

<u>व्याख्या:</u>

ब्रह्मवनि । "वन षण संभक्तौ" ब्रह्मणा ब्राह्मणेन वन्यते पुरोडाशनिष्पत्त्यर्थं स्वीक्रियते इति ब्रह्मवनि ।

अग्ने ब्रह्म गृभ्णीष्व धरुणमस्यन्तरिक्षं दृंह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय । विश्वाभ्यस्त्वाशाभ्य उपदधामि चितः स्थोर्ध्वचितो भृगूणामङ्गिरसां तपसा तप्यध्वम् ॥18॥

21. <u>शब्दः</u>

" अग्ने ब्रह्म गृभ्णीष्व"

<u>व्याख्या:</u>

हे अग्ने, निधीयमानाङ्गारस्थं ब्रह्म प्रति धर्त्रिमाभिः क्रियमाणं गृभ्णीष्व गृह्णीष्व । नाशकरोपधेनानुगृह्णीष्व । यद्वा ब्रह्म ब्राह्मणं मामनुगृह्णीष्व । अङ्गुलिदा नाशकं मा कुर्वित्यर्थः ।

22. <u>शब्दः</u>

" चितः स्थोर्ध्वचितो"

<u>व्याख्या:</u>

हे कपालविशेषाः, यूयं चितः स्थ ऊर्ध्वमुपचितानां चितावादि-कपालानामुपकारिणो भवथ । "भृगूणामित्यङ्गारैरभ्यूहति" [का. 2.5.18] इति । अङ्गारैः कपालानि छादयेत् । हे कपालानि, यूयं भृगूणामङ्ग-

रतां शुनःशेपादि.महोनामकानां देवर्षीणां तथा तपोरूपेणाभिन्नानेन तपःप्रदं तत्तानि भवत । अस्यामुने स्वदीयरूपत्वं भावयेदित्यर्थः ।

धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा । दीर्घामनु प्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयोऽसि (20)

25. शुद्धः

" महीनांपयोऽसि"

व्याख्या:

हविषः सजीवत्वे कृते चक्षुरपेक्षा भवतीत्यनेन तद्दृश्यते इति भावः ।"पिच्यमानेषु निर्धयन्त्यो महीनामित्याज्यम्" (का. 2.5.9.) इति । हे आज्य, त्वं महीनां गवां पयोऽसि क्षीरमसि क्षीरोत्पन्नत्वाद्घृतं पयःशब्देनोच्यते ।महीति गोनाम ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । संवपामि समाप ओषधीभिः समोषधयो रसेन । सं रेवतीर्जगतीभिः पृच्यन्तां संमधुमतीर्मधुमतीभिः पृच्यन्ताम् ॥21॥

24. शब्दः

"संवपामि" मन्त्रे निगदितः ।

व्याख्या:

एतानि पिष्टानि संवपामि पात्र्यां सम्यक् क्षिपामि । पिष्ट संयवनीया आप उपसर्जन्यः ता अग्नीदानयेत् अध्वर्युः पवित्राभ्यां प्रतिगृह्णीयात् । आपः उपसर्जिनी रूपाः ओषधिभिः पिष्टरूपाभिः संपृच्यन्ताम् ।

25. शब्दः

"मधुमतीभिः"

व्याख्या:

मधुमतीः माधुर्योपेता आपः मधुमतीभिः माधुर्योपेताभिः

पिष्टरूपौषधीभिः सम्पृच्यन्ताम् । अपामोषधीनां परस्परं च प्रीतिहेतु-त्वात् संपर्को भवति ।

जनयत्यै त्वा संयौमीदमग्नेरिदमग्नीषोमयोरिषे त्वा घर्मोऽसि विश्वायुरुरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामग्निष्टे त्वचं मा हि सीद्देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधि नाके ॥22॥

26. <u>शब्दः</u>

"वर्षिष्ठेऽधि नाके"

<u>व्याख्या:</u>

हे पुरोडाश, सविता देवः वर्षिष्ठे अत्यन्तवृद्धे नाके सुखोपवर्तिनि नाकनाम्नि अग्नौ त्वा त्वां अधिश्रित्य पक्वं करोतु । पुरोडाशस्य श्रपणे वृद्धत्वं वा वृद्धित्वमभिप्रेत्य देवस्त्वा इति उच्यते आदौ । दिवि नाको नामाग्नी स्वाहा इति निरुक्त वचनान्नाको नाम स्वर्गलोकोऽग्निः।

मा भेर्मा संविक्था अतमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा भूयात् ।
त्रिताय त्वा द्विताय त्वैकताय त्वा ॥23॥

27. <u>शब्दः</u>

"संविक्थाः"

<u>व्याख्या:</u>

हे पुरोडाश, त्वं मा भेः भयं मा कार्षीः । मा संविक्थाः चलनं मा कार्षीः । "ञिभी भये" "ओविजी भय चलनयोः" इत्यनयोः प्रयोगौ ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् आददेऽध्वरकृतं देवेभ्य इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा वायुरसि तिग्मतेजा द्विषतो वधः ॥

28. <u>शब्दः</u>

"सहस्रभृष्टिः शततेजा"

व्याख्या:

सहस्रभृष्टिः भृष्टिर्ज्वालेन पावकः । सहस्रमिति यावत् । सहस्रसंख्याकानां श्रृ भूमौ भृष्टिर्यस्य स सहस्रभृष्टिः तथा शततेजाः शतं तेजांसि यस्य सः बहुधा दीप्यमानः ।

पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषं व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्यां शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् [25]

29. शब्दः:

"द्यौर्बधान" एक शब्दः प्रथमाध्यायस्य पंचविंशे मन्त्रे उक्तः ।

व्याख्या:

स्फ्योत्खातां मृदमुत्करे स्थापयेत् । हे देव सवितः, योऽस्मान्द्वेष्टि द्वेषं करोति वयं च यं शत्रुं द्विष्मस्तमुभय विधं शत्रुं परमस्यां पृथिव्यां बधान । परमा अन्तिमा पृथिवी । छान्दसः स्याडागमः । उत्करे स्थितायां भूम्यां निगृह्य शरीरस्य बन्धनं कुरु ।

अपाररुं पृथिव्यै देवयजनाद्वध्यासं व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्यां शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् । अररो दिवं मा पप्तो द्रप्सस्ते द्यां मा स्कन् व्रजं. मौक् [26]

30. <u>शब्दः</u>

"अपाररुम्"

<u>व्याख्याः</u>

अपाररुमिति द्वितीयं प्रहरतीति [का. 2. 6. 21] । पृथिव्यै देवयजन्याः पृथिव्याः सम्बन्धिनो देवयजनाद्यागदेशात् अररुम् अररुनामानमसुरमप वध्यासम् अपनीय यथा हतो भवति तथा करवाणि । अनेन मन्त्रेण द्वितीयप्रहारं पूर्ववत्प्रहरेत् । व्रजं वर्षतु बधानेति मन्त्रत्रयस्य प्रयोगो व्याख्या च पूर्ववत् ।"अभिमन्त्रयत्याग्नीध्रुत्करमररो दिवमितीति" [का. 2. 6. 22] । हे अररो असुर, दिवं द्युलोकं यागफलरूपं त्वं मा पप्तः मा गमः । स्वर्गे त्वया न गन्तव्यम् ।"पत्लृगतौ" "पतः पुम्" [पा. 7. 4. 19] इति पुम्. पुमागमे रूपम् । "द्रप्सस्त इति तृतीयमिति [का. 2. 6. 23] । हे वेदिदेवते, ते तव पृथिवीरूपाया यो द्रप्स उपजीव्यो रसः द्यां द्युलोकं मा स्कन् मा स्कन्दतु मा गच्छतु । "स्कन्दिर्गतिशोषणयोः" व्रजं गच्छेत्यादिमन्त्रत्रयप्रयोगो व्याख्या च पूर्ववत् ।

पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीवदानुम् । यामैरयंश्चन्द्रमसि स्वधाभिस्तामु धीरासो अनुदिश्य यजन्ते । प्रोक्ष- णीरासादय द्विषतो वधोऽसि ॥ २८ ॥

31. <u>शब्दः</u>

"विसृपो, जीवदानु"

<u>व्याख्या:</u>

विसृपो नानायोधयुतात्क्रूराद्युद्धात्पुरापूर्वं देवाः जीवदानुं जीवं ददातीति जीवदानुस्तां जीवस्य धात्रीं सारभूतां यां पृथिवीमुदादाय ऊर्ध्वं गृहीत्वा स्वधाभिः वेदैः सह चन्द्रमसि इन्द्रो ऐरयन्प्राक्षिपन्स्थापया मासुः ।

32. <u>शब्दः</u>

"धीरासो"

<u>व्याख्या:</u>

धीरासः धीरा मेधाविनः । तामु । उ एवार्थे । तामेव चन्द्रस्थां पृथिवीमनुदिश्य दर्शनेन संपाद्य सैव भूमिरस्यां वेद्यां विद्यत इति भावयित्वा यजन्ते यागं कुर्वन्ति ।

33. <u>शब्दः</u>

"स्वधाभिः"

<u>व्याख्या:</u>

स्वधा शब्दो यद्यप्यन्नवाची तथाप्यत्रान्नहेतुभूता वेदत्रयी कथ्यते । "यां चन्द्रमसि ब्राह्मणा वदुः [1.2.5.19] इति श्रुतेः । ब्रह्मणा वेदेन सहेत्यर्थः । अनेन मन्त्रेण खातायां वेद्यां लोष्टकृतवैषम्यनिवृत्तये समीकरणरूपं मार्जनं कुर्यात् ।

34. <u>शब्दः</u>

"/अभिजितो ऽसि/
" प्रोक्षणीरासादय"

<u>व्याख्या:</u>

प्रोक्षणीरासादयेति अग्नीध्रं प्रति प्रैषः । प्रोक्ष्यन्त आभिरिति प्रोक्षण्य आपस्ता आसाद्य वेद्यां स्थापय । द्विषतो वध इति स्फ्यमुद्यं प्रहरतीति [का. 2.6.42] । हे स्फ्य, त्वं द्विषतः शत्रोर्वधोऽसि हिंसकोऽसि ।

प्रत्युष्टं रक्षः प्रत्युष्टा अरातयो निष्टप्तं रक्षो निष्टप्ता अरातयः । अनिशितोऽसि सपत्नक्षिद्वाजिनं त्वा वाजेध्यायै संमार्ज्मि । प्रत्युष्टं रक्षः प्रत्युष्टा अरातयो निष्टप्तं रक्षो निष्टप्ता अरातयः । अनिशितासि सपत्नक्षिद्वाजिनीं त्वा वाजेध्यायै संमार्ज्मि ॥29॥

35. <u>शब्दः</u>

" अनिशितोऽसि"

<u>व्याख्या:</u>

यथा शूर्पाग्निहोत्रहवण्योः प्रत्युष्टमिति प्रतपनं कृतं तथा स्रुवस्यापि कार्यं इत्यर्थः । हे स्रुव, त्वं निशितोऽसि । "शो तनूकरणे"। नितरां शितस्तीक्ष्णीकृतो निशितस्तथा न भवति इति अनिशितः अस्मद् विषये तीक्ष्ण उपद्रवकारी न भवति इत्यर्थः ।

36. <u>शब्दः</u>

"वाजेध्यायै" अयम् शब्द प्रथमाध्यायस्य एकोनत्रिंशे मन्त्रे उक्तः ।

<u>व्याख्या:</u>

वाजं यज्ञारण्यमन्नमर्हतीति वाजिनम् । अर्हार्थे इन् प्रत्ययः ।

विमर्धं सम्मार्जिम । वाजेध्यायै" जिइन्धी दीप्तौ" इन्धनं इध्या दीप्तिः । वाजस्येध्या वाजेध्या तस्यै वाजेध्यायै अन्नस्य दीप्त्यै प्रकाशनार्थम् । शोधितेन स्रुवेणाज्ये गृहीते हुते च सति अग्निर्दीप्यते । तद्दीप्त्याहुति कृतमन्नं प्रकाशितम् भवति इत्यर्थः ।

३८. <u>शब्दः</u>

"अग्निर्जिह्वा सुहुः" इत्यनयोः शब्दयोः प्रथमाध्यायस्य त्रिंशे मन्त्रे निगदितः ।

<u>व्याख्या:</u>

किं च हे आज्य, त्वमग्नेर्जिह्वाऽसि । यदाज्यमग्नौ हूयते तदा जिह्वेव ज्वालोत्पद्यते अतस्त्वम् अग्नेर्जिह्वा । किं भूतम् । देवेभ्योऽपि च सुहुः सुष्ठु हूयन्ते इति सुहुः । सुष्ठु हूयन्ते देवा आहूयन्ते अनया सा सुहूर्जिह्वा । ज्वालां दृष्ट्वा आयान्ति इत्यर्थः ।

३९. <u>शब्दः</u>

"ध्रुवोऽस्यारवरेष्ठः" इत्यनयोः शब्दयोः द्वितीय अध्यायस्य प्रथमे मन्त्रे कथितः ।

<u>व्याख्या:</u>

कृष्णोऽसि हे इध्म, त्वं कृष्णोऽसि कृष्णमृगरूपो यज्ञोऽसि । कृष्णमृगरूपस्य यज्ञस्य इध्मत्वेनोपचारः किं कृतः । आखरेष्ठः आसमन्तात् खरे कठिने गुहे तिष्ठति इति आखरेष्ठः । यद्वा त्वं स्वर्गं राति ददाति इति खरः । आखननीयस्थल आसमन्तात् तिष्ठति इति आखरेष्ठः अन्तोदात्तः कृष्णशब्दो वर्णवाची, अयं तु कृष्ण: आदि उदात्तत्वात् मृगवाची यज्ञः कदाचित् देवेभ्योऽपक्रान्तः स्वगोपनाय कृष्णमृगो भूत्वा वने [illegible] मध्ये प्रविश्य कुत्रचित्कठिने गुहे तस्थौ । तदेतदभिप्रेत्य कृष्ण आखरेष्ठः अग्नये इति इदं उच्यते ।

40. <u>शब्दः</u>

"ऊर्णम्रदसं, स्तृणामि" इत्यनयोः शब्दयोः द्वितीयाध्यायस्य द्वितीये मन्त्रे निगदितः ।

<u>व्याख्या:</u>

हे वेदे, त्वां स्तृणामि बर्हिषा छादयामि । किं भूतां त्वाम् ।

ऊर्णम्रदसमूर्णमिव मृदुतरामतिशयेन मृदुम्रदीयसी । ईषत्पराछान्दसः । यथा-प्रयोक्तव्येष्टुं भूमिः कम्बलादिनाच्छाद्यते कठिन्याभावाय तथा दर्भैरास्तादिना वेदिर्मृदुः स्यात् । पुनः किं भूतां स्याम् । देवेभ्यः स्वासस्थां देवोपकाराय सुखेनासितुम् स्थानभूतां सुखेन आसनेनासनेन स्थीयते यस्यां सा स्वासस्था तान् स्वासस्थाम् ।

41. <u>शब्दः</u>

"विश्वावसुः, अयम् शब्दः द्वितीयाऽध्यायस्य तृतीये मन्त्रे निगदितः ।

<u>व्याख्या:</u>

हे परिधे, विश्वावसुनामा गन्धर्वः त्वां परिदधातु आहवनीयस्य पश्चात् सर्वतः स्थापयतु । विश्वस्मिन्सर्वस्मिन् प्रदेशे वसतीति विश्वावसुः पुनरीकर्यं सोमं रक्षितुं तत्पार्श्वे सर्वत्र गंधर्वोवसदिति श्रुत्यन्तर कथा ।

42. <u>शब्दः</u>

"विश्वस्यारिष्ट्यै एव शब्दः द्वितीय अध्यायस्य तृतीये मन्त्रे कथितः ।

व्याख्या:

"रिष हिंसायाम्" रेफो रिष्टः न रिष्टः अरिष्टस्तस्मै विश्वस्याऽरिष्ट्यै । आहवनीयस्थान रूपस्य विश्वस्य हिंसापरिहाराय । परिध्यभावेऽसुराः प्रविश्य हिंसन्ति ।

४३. शब्द:

"वीतिहोत्रम्" एष शब्दः द्वितीयअध्यायस्य चतुर्थे मन्त्रे निगदितः ।

व्याख्या:

"वी गतौ" इति निर्गतिः व्याप्तिः पुरुषैः पशुधनादिभिः समृद्धिरित्यर्थः । वीतये समृद्धौ होत्रं होमो यस्य स वीतिहोत्रस्तम् इत्याशयः ।

४४. शब्द:

"कस्याश्चिदभिशस्त्यै" एष शब्दः द्वितीय अध्यायस्य पंचमे मन्त्रे कथितः ।

व्याख्या:

हे आहवनीय, सूर्यः पुरस्तात् पूर्वस्यां दिशि कस्याश्चि-दभिशस्त्यै सर्वस्या अभिशस्तेर्हिंसायाः सकाशात्त्वां पातु रक्षतु । चतुर्थी षष्ठ्यर्थे या कचिद् हिंसा प्रस्थता तां सर्वां परिहरतु इत्यर्थः ।

45. शब्दः

"स्वासस्थम्" अयम्शब्दः द्वितीयाध्यायस्य पंचमे मन्त्रे निगदितः ।

व्याख्या:

ऊर्णम्रद मृदुं देवेभ्यो देवानाम् स्वासस्थं सुखेनासनेन स्थीयते यत्र तादृशीं त्वां स्तृणामि । "अभिविद्युतस्त्वा स्वासस्थः" [वा.2.8.11] इति प्रस्तरं प्रति पाणी निदधाति ।

46. शब्दः

"घृताच्यसि जुहूर्नाम्ना" एव शब्दः द्वितीयाध्यायस्य षष्ठे मन्त्रे प्रयुक्तः ।

व्याख्या:

हे जुहूः त्वं घृताची असि । घृतमंचति प्राप्नोति इति घृताचीः घृतपूर्णा भवसि । नाम्ना च त्वं जुहूः । हूयतेऽनयेति जुहूः ।

47. शब्दः

वाजजितम्" एष शब्दः द्वितीयध्यायस्य सप्तमे मन्त्रे निगदितः ।

व्याख्या:

वाजमन्नं जयतीति वाजजित् । तत्संबुद्धौ हे वाजजित् हे अग्ने त्वामहं शोधयामि ।

48. शब्दः

"सक्ष्यन्तम्" एष शब्दः द्वितीयऽध्यायस्य सप्तमे मन्त्रे उक्तः ।

व्याख्या:

वाजं सक्ष्यन्तम् अन्नम् उद्दिश्य गमिष्यन्त भवन्तं सम्पादनो-पयुक्तम् । तथा वाजजितमन्नमुद्दिश्य जयोद्यतम् । अन्नप्रतिबन्ध

निवारकम् इत्यर्थः ।

49. शब्दः

"छायामुपस्थेयं" एष शब्दः द्वितीयाध्यायस्य अष्टमे मन्त्रे निगदितः ।

व्याख्याः

हे ,अग्ने, तव छायां छायावत्समीपवर्तिनीं वसुमतिम् सुमिम् अहम् उपस्थाम् उपतिष्ठेऽयं सेवेय । उपपूर्वस्तिष्ठतिः सेवार्थः । ततः एवमेव उपकारः कथ्यते । हे वसुमति, त्वं विष्णो यज्ञस्य स्थानमसि । अत्र स्थित्वा यागः कर्तुं शक्यते इत्याशयः ।

50. शब्दः

" अग्नीध्रात्" एष म्र श ब्दः द्वितीयाध्यायस्य दशमे मन्त्रे पठितः ।

व्याख्याः

अहं याग्नीध्रात् अग्नीध इदं कर्माग्नीध्रं तस्मात् हेतोरग्निः

ननु ते भागं प्राश्नामि इत्याशयः ।

51. <u>शब्दः</u>

"मनोजूतिः" एष शब्दः द्वितीयाध्यायस्य त्रयोदशे मन्त्रे उक्तः ।

<u>व्याख्या:</u>

मनः आज्यस्य जुषताम् । मनः जूतः सेवताम् । हे सवितः त्वदीयं चित्तं यज्ञसम्बन्धिनि आज्ये स्थापयेत्यर्थः । किं भूतं मनः जूतिः । जवतर्गति कर्मणो जूतिरिति क्तिन्प्रत्ययान्तो निपातः । प्रीत्वं वाञ्छतम् । अतीतानां गतवर्तमान कालगत पदार्थेषु गमनशीलं हि मनः । जवते शीघ्र गच्छतीति जूतिः ।

52. <u>शब्दः</u>

"प्रसवेन प्राश्नामि"

<u>व्याख्या:</u>

तत्र अन्नस्य पुरोडाशादेः प्रसवेनाऽभ्यनुज्ञया वा प्राश्नामि मां यजमानं पुष्ट रूपधारिणं प्रोत्साहयामि ।

५३. <u>शब्दः</u>

"द्विष्मः, तमवनुदताम्" उभौ शब्दौ द्वितीयाध्यायस्य पंचदशे मन्त्रे पठितः ।

<u>व्याख्या:</u>

यं च वयं द्विष्मः । यमातमस्याक्षिपम् अस्मदीयानुष्ठान-विरोधिनं शत्रुं द्विष्मः । विनाशायोद्योगम् कुर्मः । तदुभयविधं शत्रुमग्नीषोमौ देवावपनुदतां निराकुरुताम् ।

५४. <u>शब्दः</u>

"संजानाथाम्" एष शब्दः द्वितीयाध्यायस्य षोडशे मन्त्रे निगदितः ।

<u>व्याख्या:</u>

"संजानाथामिति प्रस्तरदानम्" [श. ३.६.३] इति । हे द्यावा पृथिवी द्युलोक भूलोक देव्यौ, युवां संजानाथां युष्मभागं प्रस्तरं सम्यक् अवगच्छतम् । किं च हे प्रस्तर मित्रावरुणौ प्राणापानवायू वृष्ट्या त्वां रक्षताम् ।

55. शब्दः

"पृषतीर्गच्छ" एष शब्दः द्वितीयअध्यायस्य षोडशे मन्त्रे आयात ।

व्याख्या:

हे प्रस्तर त्वं मरुतां पृषतीर्गच्छ । मरुन्नामकानां देवानां सम्बन्धिनीः पृषतीर्बिन्दुरूपा अथवा श्वेतवर्णा गच्छ प्राप्नुहि । वायुवाहनवद् वेगेन गच्छेत्यर्थः ।

56. शब्दः

"पृश्निर्भूत्वा दिवं गच्छ" एष शब्दः द्वितीय अध्यायस्य षोडशे मन्त्रे उक्तः ।

व्याख्या:

"इयं वै वशा पृश्निर्यदिदमस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं वशा पृश्निः (1.8.3.15) इति श्रुतेः वशापृश्निशब्देन भूमिरुच्यते । वशापृश्निर्भूत्वा पृथिवी भूत्वा दिवं गच्छ । पृथिवीसंबन्धि भागानादाय द्युलोकं नयेत्यर्थः । हे प्रस्तर त्वमन्तरिक्षं गत्वा तत्रस्थान्मरुतः संवाहनान्सं-तर्प्य स्वर्गं गत्वा देवांश्च संतर्प्य पृथिव्यां वृष्टिं कुरु इत्याहुतिपरिणामः सूचित इति भावः ।

57. शब्दः

"अग्नेः प्रियं पाथोऽपीतम्" एवं शब्दः द्वितीयऽध्यायस्य सप्तदशे मन्त्रे निगदितः ।

व्याख्या:

हे परिधी, अग्नेः प्रियं पाथः युवामपीतमपि गच्छतम् पाथ इति अन्न नाम [ नि.घं. 9. 7. ] आहवनीयस्य अभिमुखम् अन्नं अपि गच्छतम् । अग्नेरन्नत्वं भवद्भ्यां प्राप्यतामित्यर्थः ।

58. शब्दः

"स संस्रवभागास्थः" एष शब्दः द्वितीयऽध्यायस्य अष्टादशे मन्त्रे विनियुक्तः ।

व्याख्या:

हे विश्वेदेवाः, यूयं संस्रवभागास्थ । विभिन्नभाज्यं संस्रवः स एव भागो येषां ते संस्रवभागाः । तथाविधा भवथ । तथा यूयं संस्रवभक्षणेनान्नेन बृहन्तो महान्तः स्थ ।

59. <u>शब्दः</u>

"स्वाहा वाट् उभौ शब्दौ द्वितीयाध्यायस्य अष्टादशे मन्त्रे समागतौ ।

<u>व्याख्या:</u>

स्वाहेति वाडिति च शब्दौ हविर्दानार्थौ । सर्वथा दत्तमित्या-दरं दर्शयितुं शब्दद्वयप्रयोगः । यद्यपि "स्वाहाकारेण वा वषट्कारेण वा" इति श्रुतेर्वषट्कारो दानार्थः तथापि देवानां परोक्षप्रियत्वात्प्रत्यक्षत्वपरि-हाराय वाडितिशब्दः प्रयुक्तः ।

60. <u>शब्दः</u>

"घृताचीस्थः" एष शब्दः द्वितीयाध्यायस्य एकोनविंशे मन्त्रे प्रयुक्तः ।

<u>व्याख्या:</u>

"घृताची इति धुरि निदधाति" [का. ३.८.१९] इति । जुहूपभृतौ शकट धुरि निदध्यात् । हे जुहूपभृतौ, युवां घृताचीस्थः ।

सुतमंहतः प्राप्नुत इति सुतारत्वौ । तथाविधे पुत्रं पुत्रविनतवाहौ
घातं रक्षतु ।

61. <u>शब्दः</u>

"अग्नेऽदब्धायुः" एष शब्दः द्वितीयाध्यायस्य विंशतिमे
मन्त्रे प्रयुक्तः ।

<u>व्याख्या:</u>

दभ्नोतिर्हिंसा कर्मा (निघं. 2.19.1). आयुरिति मनुष्य
नाम ( निघं. 2.3.17) अदब्धोऽनुपहिंसित आयुर्मनुष्यो यजमानो
यस्य सोऽदब्धायुः ( अजु भ्रैजने । अश्नति भुक्ते इत्यर्थो । यद्वा "अश
व्याप्तौ" अश्नुते व्याप्नोतीत्यर्थो ) ।

61. <u>शब्दः</u>

"सुपदा योनौ" एष शब्दः द्वितीयाध्यायस्य विंशतिमे ऋचायां
पठितः ।

<u>व्याख्या:</u>

योनिरिति गृहनाम (निघ. 3.4) सुखं यत्र स्थीयते

यस्यां सा सुष्ठु दा तस्यां सुखदा। विभक्तेराकारः । तन्वगदस्थान योग्ये गृहे यां स्थापयेति शेषः ।

62. <u>शब्दः</u>

"सुदत्रः"

मं. संवर्चसा पयसा संतनूभिरगन्महि मनसा सं शिवेन त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् (24)

<u>व्याख्या:</u>

सुष्ठु ददाति इति सुदत्रः सुपूर्वाद्ददातेः ष्ट्रन् । "सर्वधातुभ्यः" (उ. 4.160) इति ष्ट्रन् । बाहुलकत्वात् प्रत्ययः ।

63. <u>शब्दः</u>

"संतनूभिरगन्महि"

<u>व्याख्या:</u>

समित्युपसर्गोऽगन्महीत्यनेन संबद्धः प्रत्येकम् । वर्चसा ब्रह्मवर्चसेन वयं समगन्महि संगता भवामः । पयसा क्षीरादिरसेन समगन्महि संगता भवामः । प्रबला तनुभिरनुष्ठानक्षमैः शरीरावयवैः ।

यदा तनूभिश्चार्यपुत्रादिभिः समगच्छहि ।

64. शब्दः

"स्वयंभूरसि"

मं. स्वयंभूरसि श्रेष्ठो रश्मिर्वर्चोदा असि वर्चो मे देहि ।
सूर्यस्यावृतमन्वावर्ते ॥26॥

व्याख्या:

स्वयंभूरिति सूर्यम् हे सूर्य ,त्वं स्वयंभूरकृतः स्वयंसिद्धोऽसि, श्रेष्ठः प्रशस्यतमो रश्मिः मण्डलशरीराभिमानी हिरण्यगर्भरश्मोऽसि ।

65. शब्दः

"कव्यवाहनः"

मं. अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा ।
अपहता असुरा रक्षा ंसि वेदिषदः ॥29॥

व्याख्या:

कवयः क्रान्तदर्शिनः पितरस्तेषां सम्बन्धि कव्यं हविः ।
तद्वोढुमधिकारो यस्यास्ति स कव्यवाहनः ।

66. <u>शब्दः</u>

"वेदिषदः"

<u>व्याख्या:</u>

वेद्यां सीदन्ति वेदिषदः तादृशाः असुराः अथवा वेदिसकाशादुत्पन्नाः । ता रक्षांसि वेद्या अवहतानि ।
असुरत्वं रक्षस्त्वं चेति जातिविशेषौ देवविरोधिनौ ।

67. <u>शब्दः</u>

"कुमारं पुष्करस्रजम्"

मं. आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषोऽसत् [33]

<u>व्याख्या:</u>

कुमारं गर्भम् पुष्करस्रजम् पुत्र रूपं गर्भं यूयं आधत्त किं भूतं कुमारम् । येन प्रकारेणेह पुष्करस्रजम् पुष्कराणां पद्मानां स्रक् माला ययोस्तौ पुष्करस्रजौ । अश्विनौ अश्विनीकुमारौ । पुष्करस्रजौ पद्म-मालिनौ देवानां भिषजौ तत्तुल्यः कुमारः पुष्करस्रक् तम् । अश्विसाम्य-कथनेन रोगहीनं सुन्दरं च पुत्रमाधत्तेति सूचितम् ।

68. शब्दः

"जुहोतन"

मं. सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन । अग्नये जातवेदसे ॥2॥

व्याख्या:

हे ऋत्विजः, अग्नये यूयं घृतेन जुहोतन जुहुत । जुहोतेः परस्य लोट् मध्यमबहुवचनस्य तस्य "तप्तनप्तनथनाश्च" (पा. 7.1.45) इति तनबादेशे गुणे जुहोतनेति रूपम् ।

69. शब्दः

"जातवेदसः"

व्याख्या:

जातं वेत्ति वेदयति वा जातवेदाः तस्मै । जातप्रज्ञानाय वा ।

70. शब्दः

"यविष्ठ्य"

मं. तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य ॥3॥

व्याख्या:

हे यविष्ठ्य युवतम कदाचित् अपि स्थविरत्व रहितेत्यर्थः। अतिशयेन युवा यविष्ठः। इष्ठनि परे "स्थूलदूरयुव" [पा. 6.4.156] इत्यादिना वा णिलोपे गुणे रूपम्। यविष्ठ एव यविष्ठ्यः। स्वार्थे तद्धितयकार

71. शब्द:

"जुषस्व समिधः"

मं. उप त्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत। जुषस्व समिधो मम [4]

व्याख्या:

हे अग्ने मदीयाः समिधः त्वं जुषस्व सेवस्व। त्वामुपयतो-रङ्गीकुर्वित्यर्थः। उपयन्तु इत्युपसर्गक्रियापदयोर्व्यवहितत्वम्।

72. शब्द:

"प्रयन्त्स्वः"

मं. आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः पितरं च प्रयन्त्स्वः [6]

व्याख्या:

स्वः प्रयन् आदित्य रूपेण स्वर्गे संचरन् पितरं च द्युलोकमपि अवदत्प्राप्तवान् । स्वः शब्देन सूर्यः (निरु. 1.4.1) द्युलोक भूलोकयो-र्मातापितृत्वमन्यत्रापि श्रूयते । द्यौः पिता पृथिवी माता इति ।

73. शब्दः

"रोचना"

व्याख्या:

एवं आदित्यरूपेण अग्निं स्तुत्वा वायुरूपेण स्तौति । आयाग्ने रोचना । "रुच दीप्तौ" दीप्तिः कान्तिश्छवितः वायुवाच्या ।

74. शब्दः

"व्यचस्वन् महिषः"

व्याख्या:

महिषो ऽग्निः दिवं व्यख्यत् द्युलोकं भोगस्थानमनुष्ठातृभ्यो विशेषेण प्रकाशितवान् प्रकाशयति च । महि माहात्म्यं यागकर्तृत्वरूपं सनोति ददाति स महिषः । "अग्निर्वै महिषः स इदं जातो महान्" इति श्रुतेः । व्यख्यत् विपूर्वस्य ख्या प्रकथने इत्यस्य "अस्यतिवक्तिख्यातिभ्योऽङ्" [पा. 3.1.52] इति च्ले रङ् । आलोप छन्दसि लुङ्लङ्लिटः [पा. 3.4.6] इति सर्वकालेषु लुङ् । अपानङ्याचरति इति अपानती । क्विबन्तादपानशब्दाच्छतृ प्रत्ययः । "उगितश्च" इति ङीप् ।

75. शब्दः

"पतङ्गाय धीयते ।

मं. त्रिंशद्धाम विराजति वाक् पतङ्गाय धीयते ।

प्रतिवस्तोरह द्युभिः [8]

व्याख्या:

वाक् विराजति शोभते स्तूयमाना सा वाक् पतङ्गाय धीयते अग्न्यर्थमुच्चार्यते । पतन् गच्छतीति पतङ्गः अग्निः । सहयरण्योः पतन् गार्हपत्यभावं गच्छति गार्हपत्यात्पतन्नाहवनीयताम् इत्यादि ।

सर्व देव सम्बन्धिनीभिः स्तुतिभिरग्निरेव सर्वात्म त्वात्स्तूयत इत्यर्थः ।

76. शब्दः

"अप्नवानः"

मं. अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः

यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे {15}

व्याख्या:

अप्नवान्शब्दोऽपत्यनामसु पठितः {निघ. 2. 2. 7} अत्र अप्नवानः पुत्रवन्तो भृगोर्वंशोत्पन्ना मुनयः । यद्वा अप्नवान् ऋषिः अप्नवानस्तत्प्रमुखा भृगवश्च मुनयः

77. शब्दः

"विशेविशे"

व्याख्या:

विशोविशो विडिति मनुष्य नाम {निघ. 2. 3. 5} यजमानरूपाय तस्मै तस्मै मनुष्याय तदुपकाराय ।

78. शब्दः

" रेवतीरमध्वम्"

मं. रेवती रमध्वमस्मिन्योनावस्मिन् गोष्ठेऽस्मिँल्लोकेऽस्मिन्क्षये
इहैव स्त मापगात ॥21॥

व्याख्या:

हे रेवतीः धनवत्यो गावः, धनहेतुत्वेन गावः, धन-हेतुत्वेन धनवत्त्वम् गवाम् । रायो विद्यन्ते यासां ता रेवत्यः । रयिर्विद्यते यासां ता रेवत्यः । रयिशब्दात् मतुप् "रयेर्मतौ बहुलम्" [पा. 6. 1. 37 वा. 5] इति रयेर्मतौ परे सम्प्रसारणम् । "सम्प्रसारणाच्च" इति पररूपम् आद्गुणः" [पा. 6. 1. 87] । पशवो वै रेवन्तः [5. 3. 4. 26] इति श्रुतेः हे रेवत्यः यूयं रमध्वं क्रीडत दोहनादूर्ध्वमस्मिन् गोष्ठे यजमान-सम्बन्धि गोवाटे रमध्वम् ॥

79. शब्दः

"मा अपगात"

व्याख्या:

मा अपगात अन्यत्र मा गच्छत । "इणो गा लुङि. [पा. 2. 4. 45] इति एतेर्लुङि गादेशे रूपम् ।

४०. **शब्दः**

"संहितानि विश्वरूपम्"

मं. स हितानि विश्वरूप्यूर्जयाविश गोपत्येन उप त्वाग्ने दिवे-दिवे दोषावस्तर्धिया वयम् नमोभरन्त एमसि [22]

**व्याख्या:**

गमित्यनुवर्तते । हे गौः, त्वं संहितानि क्षीराज्यादय हविर्दानाय यज्ञकर्मभिः संयुक्तानि ।

४१. **शब्दः**

"दिवेदिवे दोषावस्तः"

**व्याख्या:**

~~अग्निरनुवर्तते/~~। हे दोषावस्तः रात्रौ वसनशील गार्हपत्य, दिवेदिवे प्रतिदिनं वयं यजमानाः त्वां प्रत्यागच्छामः ।

४२. **शब्दः**

"वर्धमानं स्वेदमे"

मं. राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानं स्वे दमे॥23॥

<u>व्याख्या:</u>

स्वे दमे अस्मदीये गृहे वर्धमानं चातुर्मास्यहोम पशुयागादिभिरभि वृद्धिं गच्छन्तम् । दाम्यन्ति गृहस्था यत्रेति दमो गृहम् ।

83. <u>शब्दः</u>

"सूपायनो भव"

मं. स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥24॥

<u>व्याख्या:</u>

हे अग्ने गार्हपत्य, स अनेकानेक गुणयुक्तस्त्वं अस्माकं सूपायनो भव । सुखेनोपैतुं शक्यः सूपायनः । सुखमुपप्राप्तुं शक्यो भव ।

84. <u>शब्दः</u>

"वरूथ्यः"

मं. मं. अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ।
वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमं रयिं दाः ॥25॥

व्याख्या:

कक्ष्यः कक्षाय हितो कक्ष्यः तादृशाय भव । पुत्रादिसमूहे कक्षः । यद्वा कक्षं गृहम् । तस्मै हितो भव ।

85. शब्दः

"बहुश्रवा"

व्याख्या:

बहुश्रवाः बहुना धनेन श्रवः कीर्तिर्यस्यासौ बहुश्रवाः । धनाढ्योऽयमिति यस्य कीर्तिरित्यर्थः ।

86. शब्दः

"कामधरणं"

मं. तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ।
स नो बोधि श्रुधी हवमुरुष्या णो अघायतः समस्मात् [26]

व्याख्या:

यो युष्माकं कामधरणं कामानां धरणमपेक्षितफल धारकत्वं यदस्ति तद् अपि अनुष्ठातरि भूयात् । युष्मद् प्रसादादहमभीष्टफलस्य धारयिता भूयासमित्यर्थः ।

87. शब्दः

"सोमानमस्वरणं"

मं. सोमानं स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः ॥28॥

व्याख्या:

हे ब्रह्मणस्पते वेदस्य पालक, सोमानं सोमानामभिषो-
तारम् । स्वरण स्वृ शब्दोपतापयोः शब्दयितारम । कुरु ।

88. शब्दः

"अररुषः"

मं. मा नः शंसो अररुषो धूर्तिः प्रणङ् मर्त्यस्य । रक्षा णो
ब्रह्मणस्पते ॥30॥

व्याख्या:

"रा दाने" इति धातोः क्वसुप्रत्ययान्तस्य षष्ठेकवचने रूप इति
रूपम् । ररौ इति ररिवांस्तस्य ररुषः । दानं कृतवत इत्यर्थः ।

89. शब्दः

"धूर्तिः"

<u>व्याख्या:</u>

धूर्तिर्हिंसाचरति धूर्वति [निघ. 2.19] इति वधकर्मसु पठितत्वात् शत्रुकृतमनिष्टं चिन्तनं शत्रुता हिंसा वास्मान् मा व्याप्नोति इत्यर्थः ।

90. <u>शब्दः</u>

"द्युक्षम्"

मं. महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य [31]

<u>व्याख्या:</u>

द्युक्षं द्युमन्ति सुवर्णादि द्रव्याणि क्षियन्ति निवसन्ति यस्मिन् पालने तथाविधं द्युक्षम् इति ।

91. <u>शब्दः</u>

"रिपुरघशंसः"

मं. नहि तेषाममा चन नाध्वसु वारणेषु । ईशे रिपुरघशंसः [32]

<u>व्याख्या:</u>

अघशंसः सर्वदापापस्य प्रशंसको रिपुः शत्रुः समर्थो न भवति ।

मित्रादिभिः पालितानामस्माकं गृहेरक्ष्ये वा नास्ति शत्रुबाध इत्यर्थः ।

९२. <u>शब्दः</u>

"दूडभः"

मं. यदि ते दूडभो रथोऽस्माँ२ अश्नोतु विश्वतः । येन रक्षसि दाशुषः [३६]

<u>व्याख्या:</u>

दभ्नोतिर्वधकर्मा । दुःखेन दभ्यते दूडभः । केनापि सहसा हिंसितुमशक्यः । "उकारं दुर्दे. [प्रा. का. ३.३.५] इति प्रातिशाख्य-सूत्रेण दुरो रेफस्य उकारः अग्नि पदस्य ड. । येन रथेन त्वं दाशुषो यजमानान् रक्षसि पालयसि ।

९३. <u>शब्दः</u>

"आयच्छस्व"

मं. आगन्म विश्ववेदसमस्मभ्यं वसुवित्तमम् अग्ने सम्राडभि द्युम्नमभि सह आयच्छस्व [३८]

<u>व्याख्या:</u>

हे अग्ने द्युम्नं सहश्च अस्मभ्यमभि आयच्छस्व । "दाण् दाने"

"पाघ्रा-[पा. ७. ३. ७८] इत्यादिना यच्छादेशः । यमो वशं यात्मन्यं देहि । यच्छस्वेति यमेरूपं वा आयच्छस्व आगमय ।

९४. <u>शब्दः</u>

"मा वेपध्वम्"

मं. गृहा मा बिभीत मा वेपध्वमूर्जं बिभ्रत एमसि । ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः ॥४१॥

<u>व्याख्या:</u>

हे गृहाः कोऽपि शत्रुरागत्य विनाशयिष्यतीति बुध्वा कम्पं मा कार्ष्ट ।

९५. <u>शब्दः</u>

"येषामध्येति प्रवसन्येषु"

मं. येषामध्येति प्रवसन्येषु सौमनसो बहुः । गृहानुप ह्वयामहे ते नो जानन्तु जानतः ॥४२॥

<u>व्याख्या:</u>

प्रवसन् देशान्तरं गच्छन् यजमानो येषां मध्येति । "इक् स्मरणे

यान् गुहान् स्मरति । "अधीगर्थदयेशां कर्मणि" [पा. 2.3.52] इति षष्ठी । गृहविषयं क्षेमं सदा चिन्तयतीत्यर्थः ।

96. शब्दः

"शग्म शंयोः"

मं. उपहूता इह गाव उपहूता अजावयः । अथोऽन्नस्य कीलाल उपहूतो गृहेषु नः । क्षेमाय वः शान्त्यै प्रपद्ये शिव शग्म शंयोः शंयोः [43]

व्याख्या:

शंयोः शमिति सुख नाम [निघं. 3.6.19] तत्कारयते इति शंयुः "शंयुरिदं कामय मानः [नि. 6.31] इति यास्कोक्त ।

97. शब्दः

"रिशादसः"

मं. प्रघासिनो हवामहे मरुतश्च रिशादसः । करम्भेण सजोषसः [44]

व्याख्या:

रिशादसः रिशतिर्हिंसार्थः । रिशतिर्हिंसार्थः । रिशां

वैरिकुलं हिंसां दस्यन्ति उपक्षयन्तीति रिशादसः "दसु उपक्षये" दिवादिः । यद्वा रिशन्ति हिंसन्तीति रिशाः । "इगुपध-" [पा. 3. 1. 135] इति कः । रिशान् हिंसकान् दस्यन्तीति रिशादसः । यद्वा रिशन्तीति रिशन्तः । शतरि दीर्घश्छान्दसः । रिशतोऽस्यन्ति क्षिपन्ति ते रिशादसः ।

98. शब्दः

"निचुम्पुणः"

मं. अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि [48]

व्याख्या:

"चुप मन्दायां गतौ" । नितरां चोपति मन्दं गच्छति निचुम्पुणः उकारप्रत्ययो मुमागमश्च । यद्वा नीचैः रस्मिन्क्वणन्ति नीचशब्देन । कर्म कुर्वन्त्यवभृथे निचुम्पुणैः ।

99. शब्दः

"पूर्णबन्धुरः"

मं. सुसंदृशं त्वा वयं मघवन्वन्दिषीमहि । प्र नूनं पूर्णबन्धुरः स्तुतो याहि वशाँ अनु योजा न्विन्द्र ते हरी {52}

व्याख्या:

बन्धुर शब्दो रथनीडवाची । स्तोतृभ्यो देयैर्धनैः सम्पूर्णरथनी-डोपेतो भूत्वा गच्छति ।

100. शब्दः

"नाराशंसेन"

मं. मनो न्वाहुवामहे नाराश सेन स्तोमेन पितृणां च मन्मभिः {53}

व्याख्या:

शंसः प्रशंसनं नराणां मनुष्याणां योग्यः शंसो नराशंसः तत्सम्बन्धी नाराशंसस्तेन नाराशंसेन ।

101. शब्दः

"ज्योक्च सूर्यं दृशे"

मं. आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक्च सूर्य दृशे {54}

<u>व्याख्या:</u>

ज्योगिति निपातश्चिरवचनः। ज्योग्जीवने चिरं जीवितुम्। सूर्यं दृशे च चिरकालं सूर्यमवलोकयितुं च। एतेषां संकल्पादीनां सिद्ध्यै मनः पुनरागच्छतु।

102. <u>शब्द:</u>

"रिप्रं प्रवहन्ति"

मं. आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु।
विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूत
एमि। दीक्षातपसोस्तनूरसि तां त्वा शिवां शग्मां
परिदधे भद्रं वर्णं पुष्यन् [2]

<u>व्याख्या:</u>

"रिप्रं प्रवहन्ति पापं प्रवहन्ति प्रक्षेणापनयन्तु। "रपो रिप्रमिति पापनामनी भवतः [निरु. 4.21] इति यास्कः।

103. <u>शब्द:</u>

"विश्वशंभुवः"

मं. आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहा
दीक्षायै तपसेऽग्नये स्वाहा सरस्वत्यै पूष्णेऽग्नये स्वाहा ।
आपोदेवीर्बृहतीर्विश्वशंभुवो द्यावा पृथिवी उरो अन्तरिक्ष ।
बृहस्पतये हविषा विधेम स्वाहा ॥7॥

व्याख्या:

विश्वशंभुवः विश्वस्य जगतः शं सुखं भावयन्ति जनयन्ति वा विश्वशंभुवः ।

104. शब्दः

"रक्षाणो अप्रयुच्छन्"

मं. अग्ने त्वं सुजागृहि वयं सुमन्दिषीमहि । रक्षाणो अप्रयुच्छन्प्रबुधे नः पुनस्कृधि ॥15॥

व्याख्या:

अप्रयुच्छन् । "युछ प्रमादे" । अप्रमाद्यन् । द्व्यचोऽतस्तिङः [पा. 6.3.135] इति संहितायां दीर्घः । नश्च धातुस्थोरुषुभ्यः" [पा. 8.4.27] इति न इत्यस्य णत्वम् । नो अप्रयुच्छन्नित्यत्र "एङः पदान्तादति" [पा. 6.1.109] इति पूर्वरूपे प्राप्ते "प्रकृत्यान्तः पा-

द्यमव्यवरे [पा. 6.1.115] इति प्रकृतिभावः । किंच अग्ने, नोऽस्मान् पुनः प्रबुधे प्रबोधाय । कृधि कुरु । प्रबोधनं प्रबुध तस्मै प्रबुधे । संपदादित्वात्भावे क्विप् । अतोऽग्नेः प्रार्थनं रक्षां नाशाय । तदुक्तं तित्तिरिणा "अग्निमेवाधिपं कृत्वा स्वपिति रक्षासवरुत्या" इति ।

105. शब्दः

"पुनरायुर्म आगन्"

मं. पुनर्मनः पुनरायुर्म आगन्पुनः प्राणः पुनरात्मा म आगन्पुनश्चक्षुः पुनः श्रोत्रं म आगन् । वैश्वानरो अदब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यात् [15]

व्याख्या:

गमेर्लङि शपि लुप्ते "हल्ङ्याब्भ्यः" [पा. 6.1.68] इति प्रत्ययलोपे मकारस्य नकारे प्रथमैकवचने आगन्निति रूपम् । किंच स्वापकाले मे मदीयमायुर्नष्टप्रायं भूत्वा पुनरागन् इदानीं पुनरुत्पन्नमिवाभवत् । तथा मे प्राणो वायुः पुनरागन् । तथा मे आत्मा जीवः पुनरागन् । तथा मे चक्षु पुनरागन् । तथा मे श्रोत्रं श्रवणेन्द्रियं पुनरागन् । "सर्वे ह वा एते स्वपतोऽवक्रामन्ति" [ 5.2.2.23] इति श्रुतेः । स्वापकाले मनआदीनामपक्रमो भवति तेषां पुनर्यथास्थानमागमनं प्रार्थ्यते । एवं सर्वेन्द्रियेषु

समागतेषु अयमग्निः अवद्यात् वदितु मयोग्यात् निन्दितात् दुरितात्पापात्
नोऽस्मान् पातु पालयतु । यद्वा अवद्यात् दुर्यशसो दुरितात्पापेभ्य पातु ।
किं सोऽग्निः । वैश्वानरः विश्वेभ्यो नरेभ्यो हितः सर्वपुरुषोप-
कारकः । "नरे संज्ञायाम् (पा. 6.3.129) इति पूर्व पददीर्घः । अदब्धः
केनाप्यहिंसितः तनूपाः तनूं पातीति अस्मदीयशरीरपालकः ।।

106. शब्दः

"उभयतः शीर्ष्णी"

मं. चिदसि मनासि धीरसि दक्षिणासि क्षत्रियासि यज्ञियास्यदि-
तिरस्युभयतः शीर्ष्णी । सा नः सुप्राची सुप्रतीच्येधि मित्रस्त्वा
पदि बध्नीतां पूषाध्वनस्पात्विन्द्रायाध्यक्षाय (19)

व्याख्या:

उभयतः शीर्ष्णी उभयतः शीर्षे यस्याः सा । ज्योतिष्टोमस्या-
द्यन्तयोः प्रायणीयोदयनीययोः शीर्षत्वम् । "द्वे शीर्षे प्रायणीयोदयनीये"
(निरु. 13.7) इति यास्कोक्तेः । यद्वोभयतःशीर्ष्णी सर्वतोमुखी वाग्रूपत्वात् ।

107. शब्दः

"सयूथ्य"

मं. अनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः।

सा देवि देवमच्छेहीन्द्राय सोमं रुद्रस्त्वा वर्तयतु स्वस्ति

सोमसखा पुनरेहि ॥20॥

व्याख्या:

सयूथ्यः समाने एकस्मिन् यूथे गोसमूहे भवः सयूथ्यः सखा वत्सोऽनुमन्यताम् ।

108. शब्दः

"सुम्ने रम्णातु"

मं. वस्व्यस्यदितिरस्यादित्यासि रुद्रासि चन्द्रासि बृहस्पतिष्ट्वा

सुम्ने रम्णातु रुद्रो वसुभिराचके ॥21॥

व्याख्या:

किंच बृहस्पतिः सुम्ने त्वा रम्णातु रमयतु । रमतेर्ण्यन्तस्येदं

श्नाप्रत्ययः । यद्वा रम्णातु संयमयतु । "रम्णातिः संयमनकर्मा विसर्जनकर्मा वा" [नि. 10/9] इति यास्कः ।

109. शब्दः

"तातो रायः

मं. अदित्यास्त्वा मूर्धन्नाजिघर्मि देवयजने पृथिव्या इडायास्पदमसि घृतवत्स्वाहा । अस्मे रमस्वास्मे ते बन्धुस्त्वे रायो मे रायो मा वयं रायस्पोषेण वियौष्म तातो रायः [22]

व्याख्या:

"तातो" शब्दः कस्यचिदर्थे अव्ययम् । तोतः अस्मे रायो धनानि पशवो वा पक्षपेण तिष्ठन्तु । यद्वा व्याख्यानान्तरे कार्यत्वात्तोतः शब्दो युष्मत्पर्यायः । तोतः त्वामपि रायः सन्तु ।

110. शब्दः

" उशन्तम्"

मं. मित्रो न एहि सुमित्रध इन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्त स्योनः

स्योनम् । स्यात् ग्रावा ऋधारे बल्मारे हन्त तुहन्त कृशानवेते वः लोमकृपणास्तान्मध्ये मा वो दभ्रन् {27}

व्याख्या:

उशन् "वश कान्तौ" धातोः उशन् शतृ प्रत्ययः । उशं कामयमानः तथा स्योनः सुखकृतः । किं कृतं उरुम् । उशन्तम् सोमं कामयमानं स्योनमुपवेशे सुखकरम् ।

III. शकट:

"प्रतिपन्थामपद्महि

मं. प्रति पन्थामपद्महि स्वस्तिगामनेहसम् । येन विश्वाः
परि द्विषो वृणक्ति विन्दते वसु {29}

व्याख्या:

शकटमभिलक्ष्य गच्छेदित्यर्थः । अनुष्टुप्पथिदेवत्या । पन्थानं स्तौति । येषां मार्गं प्रत्यपद्महि वयं प्रतिपन्नाः । प्राप्ता अभूमेत्यर्थः । "पद गतौ" इत्यस्य व्यत्ययेन शपि लुङि लङि. रूपम् विन्दते पूर्वलक्ष्ये पन्थामिति रूपम् ।

112. <u>शब्दः</u>

"धूर्षाहौ"

मं. उस्रावेतं धूर्षाहौ युज्येथामनश्रू अवीरहणौ ब्रह्मचोदनौ ।
स्वस्ति यजमानस्य गृहान्गच्छतम् ।33।

<u>व्याख्या:</u>

धूर्षाहौ धुरं सहेते तौ धूर्षाहौ शकट धुरं वोढुं समर्थौ ।

113. <u>शब्दः</u>

"प्रच्यवस्व"

मं. भद्रो मेऽसि प्रच्यवस्व भुवस्पते विश्वान्यभि धामानि । मा त्वा परिपरिणो विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो विदन् ।। श्येनो भूत्वा परापत यजमानस्य गृहान्गच्छ तन्नौ संस्कृतम् ।

<u>व्याख्या:</u>

हे सोम ! विश्वानि सर्वाणि धामान्यभि स्थानानि यज्ञशाला हविर्धान प्रभृतीनि अभिलक्ष्य प्रच्यवस्व प्रकर्षेण गच्छ । च्युङ्. गतौ ।

114. शब्दः

"स्कम्भसर्जनीस्थः"

मं. वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनी स्थो वरुणस्य ऋतसद-
न्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद [36]

व्याख्या:

शकटयुगे वहतोर्बलीवर्दयोर्गलबहिर्भागे काष्ठनिर्मिते शम्ये स्थाप्येते। ताभ्यां वृषयोरितस्ततो गमनं निवार्यते तस्मात् स्कम्भसर्जनीशब्देनोच्येते। हे शम्ये, युवां वरुणस्य स्कम्भसर्जनी स्थः। "स्कम्भु रोधने"। "सर्ज अर्जने" स्कम्भनं स्कम्भो रोधः स सर्ज्यते क्रियते याभ्यां ते स्कम्भसर्जन्यौ। विभक्तेः पूर्वसवर्णः।

115. शब्दः

"गयस्फानः प्रतरण""

मं. या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु
यज्ञ। गयस्फानः। प्रतरणः सुवीरोऽवीरहा प्रचरा
सोम दुर्यान् [37]

व्याख्या:

गय इति गृहनाम। [निघ. 3.4.] "स्फायी वृद्धौ"।

गयान्स्फावयतीति गयस्फानः गृहाभिवर्धकः । प्रतरणः प्रकर्षेण तरन्त्यापदो येन स प्रतरणः । यद्वा प्रतारयति पदपारं प्रापयतीति प्रतरणः ।

116. <u>शब्दः</u>

"रायस्पोषदे विष्णावेत्वा"

मं. अग्नेस्तनूरसि विष्णवे त्वा सोमस्य तनूरसि विष्णवे त्वातिथेरातिथ्यमसि विष्णवे त्वा श्येनाय त्वा सोमभृते विष्णवे त्वाग्नये त्वा रायस्पोषदे विष्णवे त्वा ॥१॥

<u>व्याख्या:</u>

रायो धनं कृषिकृष्यादिना बहुधा पोषयित्वा रातेऽर्पयति स रायस्पोषदाः अग्निसंज्ञोऽसुरः सोमानुचरोऽस्ति । अनुष्टुप्छन्दो-ऽधिष्ठाता देव तस्मै धनपुष्टिदायिनेऽग्नये हे हविः, त्वा त्वां गृह्णामि ।

117. <u>शब्दः</u>

"श्येनाय त्वा सोमभृते

<u>व्याख्या:</u>

श्येनो नाम देवः सोमराजानुचरः स्वर्गात्सोमहर्ता श्येनरूप

धारिणायस्यूयधिष्ठाता तस्मै श्येनाय बिभ्रते सोमाय च त्वां निर्वपामि ।

118. <u>शब्दः</u>

"अभिशस्तिपावा"

मं. अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अभिशस्तिपावा । स नः स्योनः सुयजा यजेह देवेभ्यो हव्य सदमप्रयुच्छन्त्स्वाहा (5)

<u>व्याख्या:</u>

अभिशस्तिर्वैरूप्यनिमित्तोऽभिशापस्तस्मात्पाति रक्षतीत्यभिशस्तिपावा । "आतो मनिन्- (पा. 3.2.74) इति वनिप् प्रत्ययः ।

119. <u>शब्दः</u>

"शाक्वराय"

मं. आपतये त्वा परिपतये गृह्णामि तनूनप्त्रे शाक्वराय शक्वन ओजिष्ठाय । अनाधृष्टमस्यनाधृष्यं देवानामोजोऽनभिशस्त्यभिशस्तिपा अनभिशस्तेन्य मंजसा सत्यमुपगेष स्विते मा धाः ।

व्याख्या:

शार्वराय शक्नुवन्ति स्वप्तुं भूतानि यत्र स शर्वर आकाशस्तत्रभवत्वं शार्वरस्तस्मै शार्वराय ।

120. शब्द:

"वर्षिष्ठा, गह्वरेष्ठा"

मं. या ते अग्नेऽयःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत्स्वाहा या ते अग्ने रजःशया तनूर्वर्षिष्ठा गह्वरेष्ठा उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहा।याते अग्ने हरिशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहा (8)

व्याख्या:

वर्षिष्ठा देवानामतिशयेनाभिमतफलवर्षिणी । तथा गह्वरेष्ठा गह्वरे असुराणां विघ्ने देशे तिष्ठतीति गह्वरेष्ठा ।" हलदन्तात्सप्तम्याः संज्ञायाम् (पा. 6. 3. 3. 9) इति विभक्तेरविभक्तेरलुक् ।

121. शब्दः

" पुरीष्यमसि"

मं. पुरीष्योऽसि पृथिव्यां हु ह पुरीषिदन्तरिक्षं द्यावापृथिवी दिवं हु ह्यग्नेः पुरीष्यमसि ॥ 13 ॥

व्याख्या:

हे गुग्गुलुप्रभृतिसंभार समूह त्वमग्नेः पुरीषं पूरकमसि । पूरयतीति पुरीषम् "अग्नेर्ह्येतत्पुरीषम् यत्संभाराः" इति तितिरिः ।

122. शब्दः

यः पार्थिवानि रजांसिविममे"

मं. विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजा  सि । यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वा ॥ 16 ॥

व्याख्या:

यो विष्णुः पार्थिवानि रजांसि पृथिव्यन्तरिक्षद्युलोकस्थानानि

विममे निर्ममे । 'लोका रजांस्युच्यन्ते [नि. 4.19] इति

यास्कोक्तेः रजः शब्दो लोकवाचकः । यद्वा यः पार्थिवानि रजांसि

पार्थिव परमाणून्विममे परिगणितवान् ।

123. शब्दः

"कुचरः"

मं. प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा [20]

व्याख्या:

कुचरः कौ पृथिव्यां मत्स्यादि रूपेण चरतीति कुचरः ।

124. शब्दः

"गिरिष्ठाः

व्याख्या:

गिरिष्ठाः गिरि वेदवाण्यां गिरौ देहे वान्तर्यामिरूपेण तिष्ठतीति गिरिष्ठाः ।

125. <u>शब्दः</u>

" वलगहनम् "

मं. रक्षोहणं वलगहनं वैष्णवीमिदमहं तं वलगमुत्किरामि यं मे निष्ट्यो यममात्यो निचखानेदमहं तं वलगमुत्किरामि यं मे समानो यमसमानो निचखानेदमहं तं वलगमुत्किरामि यं मे सबन्धुर्यमसबन्धुर्निचखानेदमहं तं वलगमुत्किरामि यं मे सजातो यमसजातो निचखानोत्कृत्यां किरामि (23)

<u>व्याख्या:</u>

वलगान् हन्तीति वलगहा तम् । "बहुलं छन्दसि" (पा. 3.2.88) इति क्विप्। पराजयं प्राप्य यजमाने राक्षसैरिन्द्रादिद्वेषार्थमभिचाररूपेण भूमौ निखाता अस्थि केशनखादिपदार्थाः कृत्याविशेषा वलगाः । "वलगो वृणोतेः" (निरुक्त 6.2) इति यास्कः ।

126. <u>शब्दः</u>

"अमा"

<u>व्याख्या:</u>

अमा शब्दो गृहार्थः सहार्थो वा। अमा गृहे सह वा

अमाऽमात्यः "अव्ययात्त्यप्" [पा. 4.2.104] इति भवार्थे त्यप् ।
धनिकस्य स्वामिनो धनगृहादिनिर्वाहकोऽमात्यः ।

127. शब्दः

"प्रतक्वा"

मं. उशिगसि कविरङ्घारिरसि बम्भारिरवस्यूरसि दुवस्वाञ्छुन्ध्यूरसि मार्जालीयः सम्राडसि कृशानुः परिषद्योऽसि पवमानो नभोऽसि प्रतक्वा मृष्टोऽसि हव्यसूदन ऋतधामासि स्वर्ज्योतिः [32]

व्याख्या:

प्रतक्वा प्रदक्षिणं तकन्ति गच्छन्ति ऋत्विजो यत्र स प्रतक्वा।
तकतिर्गत्यर्थः "अन्येभ्योऽपि दृश्यन्ते" [पा. 3.2.75] इति वनिप् ।

128. शब्दः

" मा सन्ताप्तम्"

मं. समुद्रोऽसि विश्वव्यचा अजोऽस्येकपादहिरसि बुध्न्यो वागस्यैन्द्र-

मति सद्योऽप्यृतस्य द्वारौ मा मा सन्ताप्तमध्वनामध्वपते प्र
मा तिर स्वस्ति मेऽस्मिन्पथि देवयाने भूयात् [33]

व्याख्या:

मा संताप्तम् मा संतापयतं प्रदेशानितः मयो स्व सनातनिं । तपेर्लुङि. मध्यमैकवचने 'झलो झलि' [पा. 8.2.26] इति सि लोपे रूपम् जातम् ।

129.
शब्दः:

"जुहुराणम्"

मं. अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि
विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम
[36].

व्याख्या:

हूर्छितुं कुटिलीकर्तुमिच्छतीति जुहुराणम् । अभिलषितक्रिया-प्रतिबन्धकमित्यर्थः । "हुर्छा कौटिल्ये" अस्मात् हुर्छेः सनो लुक् छलोपश्च

[उणा 2.88] औणादिकसूत्रेणानच् प्रत्यये रूपम् ।

130. शब्दः

"अवरेभ्यः"

मं. अत्यन्याँ 25 अगाँ नान्याँ 25 उपागामर्वाक्त्वा परेभ्यो-
ऽवरेभ्यः । तं त्वा जुषामहे देव वनस्पते देवयज्यायै देवास्त्वा
देवयज्यायै जुषन्तां विष्णवे त्वा । ओषधे त्रायस्व स्वधिते
मैनं हिंसीः [42]

व्याख्या:

अवरेभ्यः निकटेभ्यः परः परस्तादुचितं "जिह्वल गतौ"
"पुषादि- [पा. 3.1.55] अल्ङ्. लुङि. रूपम् ।

131. शब्दः

"तेतिजानः"

मं. द्यां मा लेखीरन्तरिक्षं मा हिंसीः पृथिव्या संभव अयं हि
त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय । अतस्त्वं
देव वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयं रुहेम [43]

व्याख्या:

"तिज निशाने" अस्माद् ङ्.न्तात्स्वार्थे तेतिजानः इति रूपम् । अतः त्वया छेदान्न भेतव्यम् इति भावः ।

132. शब्दः

"उश्मसि"

मं. या ते धामान्युश्मसि गमध्यै यत्र गावो भूरिशृङ्.गा अयासः ।
अत्राह तदुरुगायस्य विष्णोः परमं पदमवभारि भूरि ॥
ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामि । ब्रह्म दृ ह
क्षत्रं दृ ह आयुर्दृ ह प्रजां दृ ह [3]

व्याख्या:

उश्मसि "वश कान्तौ" लटि उत्तमबहुवचने मसौ लोपे सम्प्रसारणे "इदन्तो मसि " [पा. 7.1.46] इति इकारः । यानि तव स्थानानि गन्तुं वयमिच्छाम इत्यर्थः ।

133. <u>शब्दः</u>

"व्यथिषत्"

मं. सं ते मनो मनसा सं प्राणः प्राणेन गच्छताम् । रेडस्यग्निष्ट्वा श्रीणात्वापस्त्वा समरिणन्वातस्य त्वा ध्राज्यै पूष्णो रंह्यै ऊष्मणो व्यथिषत्प्रयुतं द्वेषः [18]

<u>व्याख्या:</u>

"व्यथ भय चलनयोः अस्य "लिङर्थे लेट्" [3.4.7.] इति । लेटि "सिब्बहुलं लेटि [पा. 3.4.34] इति सिप्प्रत्यये "इतश्च लोपः परस्मैपदेषु [पा. 3.4.97] इति सिप इकार लोपे "लेटोऽडाटौ [पा. 3.4.94] इति अडागमे व्यथिषदिति रूपम् जातम् ।

134. <u>शब्दः</u>

"धिषणा"

मं. सोम राजन्विश्वास्त्वं प्रजा उपावरो विश्वास्त्वां प्रजा उपावरोहन्तु । शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः । श्रोता ग्रावाणो विदुषो न यज्ञं शृणोतु देव सविता हवं मे स्वाहा [26]

व्याख्या:

"धिषणा धीसादिन्यौ वा धीसानिन्यौ वा" [नि. 8.4]
इति यास्कः । धियं सन्वन्ति ददति धिषणाः "षणु दाने" धातोः ।

135. शब्दः

"मदिन्तमः"

मं. देवीरापो अपांनपाद्यो व ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमः
तं देवेभ्यो देवत्रा दत्त शुक्रपेभ्यो येषां भाग स्थ स्वाहा [27]

व्याख्या:

मदिन्तमः मदयतीति मदी अतिशयेन मदी मदिन्तमः पायमानोऽत्यन्तहर्षकारी तर्पयितृतमः "नाद्घस्य" [पा. 8.2.17] इति तमपि नुमागमः ।

136. शब्दः

"जुनाः"

मं. यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः । स यन्ता
शश्वतीरिषः स्वाहा [29]

व्याख्या:

शुना+ "शु गतौ" श्ना प्रत्ययः "श्नसोरल्लोपः"

[पा. 6.4.111] अकार लोपे रूपम् शुना इति ।

137. शब्दः

"धूर्तुरौ"

मं. इयामा रथ धूर्तुरौ हरयोगुर्ता अनुमत्य पत्नीः । ता देवैर्देवेभिर्यज्ञं नयतोपहूताः सोमस्य पिबत [34]

व्याख्या:

तुर्वतिर्वध कर्मा । धूर्तं हिंस्यं तुर्वन्ति हिंसन्ति ता धूर्तुरः । क्विपि राल्लोपः [पा. 6.4.21] इति व लोपः ।

138. शब्दः

"प्रशंसिष"

मं. त्वमङ्.ग प्रश  सिषो देवः शविष्ठ मर्त्यम् । त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः

140. <u>शब्दः</u>

"मादयस्व"

मं. अन्तस्ते द्यावापृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षम् ।

सजूर्देवेभिरवरैः परैश्चान्तर्यामे मघवन्मादयस्व {5}

<u>व्याख्या:</u>

मादयस्व हर्षयस्वात्मानम् । यद्वा तृप्यस्व "मद तृप्तौ" चुरादिरात्मनेपदी । देवेभिरित्यत्र "बहुलं छन्दसि" {पा. 7.1.10} इति ऐसोऽभावे "बहुवचने झल्येत्" {पा. 7.3.103} इति एकारः ।

141. <u>शब्दः</u>

"तिग्मं"

मं. मनो न येषु हवनेषु तिग्मं विपः शच्या वनुथो द्रवन्ता ।

आ यः शर्याभिस्तुविनृम्णो अस्याऽश्रीणीताऽऽदिशं गभस्तौ ।।

एष ते योनिः प्रजाः पाह्यपमृष्टो मर्को देवास्त्वा मन्थिपाः प्रणयन्त्वनाधृष्टासि ।

**व्याख्या:**

तिग्मं तेजतेरुत्साहकर्मणः (नि. 10.6) इति यास्कः । मनोऽनुकूलतासुखं यथा तथा कनुकः । प्रथमपुरुष स्थाने मध्यमपुरुषश्छान्दसः कनुकः व्याप्नुतः पुनरपि गुडाम् भिः प्रदत्त ... इति शेषः । भवेति निमित्त-तृतीया वा । कर्म निमित्तं व्याप्नुत इत्यर्थः किंभूतौ । स्थितिवतौ द्रवन्ता द्रवन्तौ गच्छन्तौ हवनेषु तेजसेन कर्तव्येषु होमेषु प्रचरन्तौ । यो-ऽध्वर्युः शर्मभिः अङ्गुलीभिर्गृह्णीतौ ग्रावाणौ स्थितवतस्य मन्थिग्रहस्य । कर्षणि कर्ठौ । इमं मन्थिसमानि प्रतिक्षिप्तौ अभीषीत समन्तात् शाणीते स्वतुभिर्भिद्यति । किंभूतौ यः । तुविद्युम्नः तुवि द्युम्नं यस्य बहुधनः महादक्षिणः ।

142. **ग्रहः**

"स्वाग्रयणः"

मं. उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणः पाहि यज्ञं पाहि यज्ञपतिं विष्णुस्त्वामिन्द्रियेण पातु विष्णुं त्वं पाह्यभिसवनानि पाहि (20)

**व्याख्या:**

आग्रस्य भावः आग्रम् सुष्ठु आग्रम् स्वाग्रम् ...ऽग्रयणं भवति प्रापयति इति स्वाग्रयणः अग्राऽस्य यतीयरेति लोपः ।

143. <u>शब्दः</u>

"आसन् आपात्रम्"

मं. मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।
कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः [24]

<u>व्याख्या:</u>

आस्य शब्दस्य सप्तम्येकवचने "पद्दन्"-[पा. 6.1.63] इति सूत्रेण आसन् आदेशः "सुपां सुलुक् [ पा. 7.1.39] इति सप्तमी लोपः । आसन् आसनि आस्ये मुखे आपात्रम् अभिमुखेन पीयतेऽनेनेत्यापात्रम् ।

144. <u>शब्दः</u>

"आ घा ये अग्निमिन्धते"

मं. आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् ।
येषामिन्द्रो युवा सखा ।। उपयामगृहीतोऽस्यग्नीन्द्राभ्यां
त्वैष ते योनिरग्नीन्द्राभ्यां त्वा [ 32]

<u>व्याख्या:</u>

ये यजमाना अग्निमा इन्धते आदीपयन्ति बर्हिरानुपूर्व्येण-

145. <u>शब्दः</u>

"सजोषा"

मं. ओमासश्चर्षणीधृतो विश्वेदेवास आगत । दाश्वांसो दाशुषः सुतम् उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यं एष ते योनिर्वि-श्वेभ्यस्त्वा देवेभ्यः ॥३३॥

<u>व्याख्या:</u>

सजोषा "जुषी प्रीतिसेवनयोः" जोषणं जोषः प्रीतिः अनुग्रहः तेन सह वर्तमानः संतुष्टः मरुद्भिः कृत्वा सगणः मरुद्गण सहित इत्यर्थः ।

146. <u>शब्दः</u>

"अनुष्वधम्"

मं. मरुत्वाँ । इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय । आसिञ्चस्व जठरे मध्व ऊर्मिं त्वं राजासि प्रतिपत्सुतानाम् ॥ उपयामगृहीतोसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ३८॥

146 [illegible]

व्याख्या:

अनुष्ठ्युम् अनु पश्चात् स्थानानि पुरोडाश आधानान्य-दधिसत्यालक्षणानि यस्य सो अनुष्ठ्युस्तम् "पूर्वपदात्"- [पा. 8.3.106] इति षत्वम् ।

147. शब्दः

"वावृधे"

मं. महाँ इन्द्रो नृवदाचर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः ।
अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ।।
उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा [39]

व्याख्या:

इन्द्रो वीर्याय वीर कर्मणे वावृधे ववृधे वर्धते । "छन्दसि लुङ्.लङ्. लिटः [पा. 3.4.6] इति वर्तमाने लिट् संहितायामभ्यास दीर्घः ।

148. शब्दः

"आचर्षणिप्राः"

व्याख्या:

आ समन्तात् चर्षणीन्मनुष्यान् प्रति अभीष्ट कामैः पूरय-तीत्याचर्षणिप्राः । प्रा पूरणे क्विप् । यथा राजा अमात्यादि-मनुष्यः सेवकानभीष्टकामैः पूरयति तद्वत् ।

149. शब्दः

"तुरीयादित्य सवनं"

स्रो. कदाचन प्रयुच्छस्युभे निपासि जन्मनी । तुरीयादित्य सवनं त इन्द्रियमातस्थावमृतं दिव्यादित्येभ्यस्त्वा [3]

व्याख्या:

हे तव तुरीयं चतुर्थं मायातीतं शुद्धं सवनं सुवति स्वकार्ये जगत्प्रे-रयति इति सवनम् ।

150. शब्दः

"अरपः"

मं. विवस्वन्नादित्यैष ते सोमपीथस्तस्मिन्मत्स्व । श्रदस्मै नरो वचसे दधातन यदाशीर्दा दम्पती वाममश्नुतः । पुमान्पुत्रो जायते विन्दते वस्वधा विश्वाहारप एधते गृहे ॥5॥

व्याख्या:

नास्ति रपो यस्या सा अरपः । रपो रिप्रमिति पापनामनी भवतः (निरु. 4.21) इति यास्कः ।

151. शब्दः

"आजग्म"

मं. सुगा वो देवाः सदना अकर्म य आजग्मेदं सवनं जुषाणाः । भरमाणा वहमाना हवींष्यस्मे धत्त वसवो वसूनि स्वाहा ।( ।8)

व्याख्या:

हे देवाः यूयमिदं सवनं यज्ञं जुषाणाः सेवमाना सन्तः आजग्म आगताः । गमेर्लिटि मध्यम बहुवचनम् ।

152. शब्दः

"सुगावो देवाः"

व्याख्या:

सुगा सुखानि सुखेन गम्यते येषु तानि सुगानि सुगमनीयानि सदनानि अकार्ष्म कृतवन्तः। "सुदुरोरधिकरणे" {पा. 3.2.48} इति सुउपसर्गे गमेर्डप्रत्यये सुगमिति रूपं विभक्तेराकारः ।

153. शब्दः

7अ "जक्षिवांसः"

मं. याँ२ आवह उशतो देव देवाँस्तान्प्रेरय स्वे अग्ने सधस्थे ।
जक्षिवांसः पपिवांसश्च विश्वेऽसुं घर्मं स्वरातिष्ठतानु
स्वाहा ।{19}

व्याख्या:

हे देवाः, विश्वे सर्वे यूयं जक्षिवांसः घस्लृ अदने "क्वसुश्च" {पा. 3.2.107} इति क्वसुः ।"वस्वेकाजाद्घसाम्" {पा. 7.2.67} इतीट् । सवनीय पशुपुरोडाशान् भक्षितवन्तः ।

154. शब्दः

"हृदयाविधश्चित्"

मं. मरिर्मूर्ना पृदाकुः । उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ । अपदे पदा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् । नमो वरुणायाभिष्ठितो वरुणस्य पाशः [23]

व्याख्या:

किं च यो वरुणः उतापि हृदयाविधश्चिदपवक्ता हृदयं विध्यति मर्मोच्चारणेन पीडयति " नहिवृतिवृषि"-[पा. 6. 3. 116] इत्यादिना क्वौ परे हृदयस्य दीर्घः। तस्य हृदयाविधः पिशुनस्यापि अपवक्ता निराकर्ताऽभूर् । निन्दकस्यापि तिरस्कर्ता पिशुनान्येषां पापकारिणामित्यर्थः ।

155. शब्दः

"परिवक्ष्व"

मं. देवीराप एष वो गर्भस्तं सुप्रीतं सुभृतं बिभृत । देव सोमैष ते लोकस्तस्मिञ्छं च वक्ष्व परि च वक्ष्व [26]

व्याख्या:

हे सोम, हे देव दीप्यमान, ते तव एव जनन्यो लोकः स्थाने तस्मिन्नवस्थितः ननु त्वं शं वह वह शं सुखकरमान्न ति प्राप्य परिवह परिवह निवर्तय अस्मतः सर्वा आर्तीरिति शेषः । "तस्मिन्नः शं धेहि सर्वान्भवाय न आर्तिभ्यो गोपाय" [4.4.5.21] वहतेर्णिद् मध्यमैक-वचने लिङ्. अपि श्रुते कर्म वहवेति । [26]

156. शब्दः

"पुरुराव्णः"

मं. अधृष्य नियुत्वन् नियुत्वः अध देवैर्देवकृतमेनो -
आदित्यमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि ।
देवानां समिदसि [27]

व्याख्या:

पुरुराव्णः पुरु बहु वित्तं धनं राति ददातीति पुरुरावा । रा दाने" "आतो मनिन्" [पा. 3.2.74] इत्यादिना वनिप् ।

पिण्डकन्दायो बधः स्वतुलादादस्मार्थं मा भूदित्यर्थः ।

157. <u>शब्दः</u>

"अस्रज्जरायुणा सह"

मं. एजतु दशमास्यो गर्भो जरायुणा सह । यथायं वायुरेजति यथा समुद्र एजति । एवायं दशमास्यो अस्रज्जरायुणा सह॥28॥

<u>व्याख्या:</u>

एवमयं दशमास्यः संपूर्णावयवो गर्भो जरायुणा सह अस्रत् निर्गच्छतु । यद्यप्ययं गर्भो दशमास्यो नास्ति तथापि संपूर्णस्यैव निर्गमनमाशास्यते । " तमेतदप्यदशमास्यं सन्तं ब्रह्मणैव यजुषा दशमास्यं करोति" [5.5.2.5] इति श्रुतेः "स्रंसु अधःपतने" व्यत्ययेन परस्मैपदे शपो लुकि च कृते "हल्ङ्याब्भ्यः" [पा. 6.1.68] इति तिपि लुप्ते " वावसाने" [पा. 8.4.56] इति तस्य दत्वे "अनिदिताम्" [पा. 6.4.24] इति नलोपे च अडागमे च अस्रदिति रूपम् ।

158. <u>शब्दः</u>

"अङ्गान्यह्रुता"

मं. यस्यै ते यज्ञियो गर्भो यस्यै योनिर्हिरण्ययी अङ्गान्यह्रुता

यस्य ते माता समवीगम स्वाहा ॥ 29॥

व्याख्या:

यस्य गर्भस्याङ्गान्यहुता । "ह्वः कौटिल्ये" "हुह्वरेश्छन्दसि" [पा. 7.2.31] इति हुरादेशो निष्ठायाम् । अकुटिलानि अवक्रितानि ते गर्भ माता जनन्यानुबन्ध्यानयया समवीगमं सङ्गमयामि । गर्भस्यान्तस्य शुङ्. यङ्. स्वाहेति होमार्थः ।

159. शब्दः

" इन्दुरन्तर्महिमानमानंजधीरः"

मं. पुरुदस्मो विषुरूप इन्दुरन्तर्महिमानमानंजधीरः । एकपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टापदीं भुवनानु प्रथन्ताम् स्वाहा ॥30॥

व्याख्या:

इन्दुरूपेण गर्भः स्तूयते । इन्दुः क्लेदनरूपः सोमसदृशो गर्भो महिमानं महत्त्वमानंज व्यक्तीकरोतु अंजेर्व्यक्तिकरणार्थस्य

लिटि रूपम् "तस्मान्नुड् द्विहलः" (पा. 7.4.71) इति
नुडागमः ।

160. शब्दः

"सुगोपातमो जनः"

मर्तो यस्य हि क्षये पाथा दिवो विमहसः स सुगोपातमो
जनः ।

व्याख्या:

पा पाने" धातो लुङ् पिबादेशाभावश्च छान्दसः संहितायां
दीर्घ "द्व्यचोऽतस्तिङः (पा. 6.3.135) इति सूत्रेण हि निश्चितं स
जनः यजमानाख्यः सुगोपातमः गोपायतीति गोपारक्षकः अत्यन्तं
शोभनो गोपा यस्य स सुगोपातमः युष्मद्भक्तानां भयं नास्तीत्यर्थः (31)

161. शब्दः

"वृषणा"

मंत्र युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा । अथा न इन्द्र
सोमपा गिरामुपश्रुतिं चर । उपयामगृहीतोऽसीन्द्राय त्वा
षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने (34)

[illegible]
व्याख्या:

"उक्ष सेचने । उक्षणौ वर्षितारौ सेक्तारौ तरुणौ ।
"वा षपूर्वस्य निगमे (पा. 6.4.9) इति दीर्घाभावः ।

162. शब्दः

"पवस्व"

मं. अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिं मयि पोषम् ।
उपयामगृहीतोऽस्यग्नये त्वा वर्चस एष ते योनिरग्नये
त्वा वर्चसे । अग्ने वर्चस्विन्वर्चस्वांस्त्वं देवेष्वसि वर्चस्वानहं
मनुष्येषु भूयासम् (38.)

व्याख्या:

पव गत्यर्थकः अन्तर्भूतण्यर्थः । गमय प्रापय ।

163. शब्दः

"स्वपा अस्मे"

बंगा
<u>व्याख्या:</u>

"सुपां सुलुक्" इत्यनेन विभक्तेः शे आदेशो अस्मे इति सुपसु सिं सुलक्ष्यम् । स्वपाः । अप इति कर्मनाम शोभनान्यपांसि अस्य स स्वपाः सुकर्मा ।

164. <u>शब्दः</u>

" ओजिष्ठम्"

मं. उत्तिष्ठन्नोजसा सह पीत्वी शिप्रे अवेपयः । सोममिन्द्र चमूसुतम् । उपयामगृहीतोऽसीन्द्राय त्वौजस एष ते योनि-रिन्द्राय त्वौजसे । इन्द्रौजिष्ठौजिष्ठस्त्वं देवेष्वस्योजिष्ठा-ऽहं मनुष्येषु भूयासम्

<u>व्याख्या:</u>

हे इन्द्र, हे ओजिष्ठ ओजो बलमस्यास्तीत्योजस्वी ।

"अस्माया" (पा. 5. 2. 121) इत्यादिना विनि प्रत्ययः ।

अत्यन्तमोजस्वी ओजिष्ठः "अतिशायने तमबिष्ठनौ" (पा. 5. 3. 55) इति इष्ठन् प्रत्ययः । "विन्मतोर्लुक्" (पा. 5. 3. 65) इतीष्ठनि परे विनिलोपः टिलोपश्च ।

165. शब्दः

"अदृश्रम्"

मं. अदृश्रमस्य केतवो विरश्मयो जनाँ अनु। भ्राजन्तो अग्नयो यथा । उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजाय । सूर्य भ्राजिष्ठ भ्राजिष्ठस्त्वं देवेष्वसि भ्राजिष्ठोऽहं मनुष्येषु भूयासम् (40)

व्याख्या:

दृशेर्लुङि "इरितो वा" (पा. 3. 1. 57) इति च्लेरङादेशे "ऋदृशोऽङि गुणः" (पा. 2. 4. 16) इति उत्तमैकवचने अदर्शमिति प्राप्ते "शीङो रुडेतस्तेर्विभाषा बहुलं छन्दसीति" (पा. 7. 1. 6- इत्युत्तरस्य मिबादेशस्यामो रुडागमो धातोर्गुणाभावश्छान्दसः । अदृश्र-मिति रूपम् ।

166. <u>शब्दः</u>

"पृतन्यतः"

मं. वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः । यो अस्माँ
२ऽअभिदासत्यधरं गमया तमः । उपयामगृहीतोऽसीन्द्राय त्वा
विमृध एष ते योनिरिन्द्राय त्वा विमृधे [44]

<u>व्याख्या:</u>

पृतन्यतः नीचा यच्छ । पृतनां संग्रामं सेनां वा इच्छन्ति पृतन्यन्ति पृतन्यन्तीति पृतन्यन्तस्तान् । "सुप आत्मनः क्यच्" [पा. 3. 1. 4] इति पृतनाशब्दात्क्यचि प्रत्यये "कव्यध्वरपृतनस्यर्चि लोपः" [पा. 7. 4. 39] इति लोपे शतृप्रत्यये च रूपम् । पृतन्यतः सेनामिच्छतः शत्रून्नीचान्न्-यग्भूतान् यच्छ निगृहाण ।

167. <u>शब्दः</u>

"मनोजुवं"

मं. वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम । स नो
विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्मा ।।
उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्मण एष ते योनिरिन्द्राय
त्वा विश्वकर्मणे [45]

<u>व्याख्या:</u>

मनोजुवस् जूरिति वचनाम । मनसो जूरिव जव इव जवो यस्य स मनो जूस्तम् । स ईदृशा इन्द्रो नोऽस्माकं विश्वानि सर्वाणि हवनानि आह्वानानि अवसेऽन्नायान्नलब्धये रक्षणाय वा बोधत् बुध्यताम् अस्मदाह्वानं साधु साध्विति सेवताम् । "लेटोऽडाटौ" (पा. 3.4.94) इत्यडागमे " इतश्च लोपः परस्मैपदेषु" (पा. 3.4.97) तिप इलोपे लोपादिति रूपम् ।

168. <u>शब्द:</u>

"मदिन्तमानाम्"

मं. प्रेणीनां त्वा पत्मन्नाधूनोमि कुकूननानां त्वा पत्मन्नाधूनोमि भन्दनानां त्वा पत्मन्नाधूनोमि मदिन्तमानां त्वा पत्मन्नाधूनोमि मधुन्तमानां त्वा पत्मन्नाधूनोमि शुक्रं त्वा शुक्र आधूनोम्यह्नो रूपे सूर्यस्य रश्मिषु (48)

<u>व्याख्या:</u>

मदिन्तमानाम् मादयन्तीति मदिन्यः अत्यर्थं मदिन्यो मदिन्तमाः

तथापि पुंवद्भावः "नलोपः प्रातिपदिकान्तस्य" [पा. 8.2.7] इति नलोपः "नाद्घस्य" [पा. 8.2.17] इति छान्दसो नुडागमः ।

169. शब्दः

"दर्म"

मं. युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तं तमिद्धतं वज्रेण तन्तमिद्धतम् । दूरे चत्ताय छन्त्सद्गहनं यदिनक्षत् । अस्माकं शत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट विश्वतः । भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याम सुवीरा वीरैः सुपोषाः पोषैः [53]

व्याख्या:

ततो दर्म दारयतीति दर्म "दृ विदारणे" "अन्येभ्योऽपि दृश्यन्ते" [पा. 3.2.75] इति मनिन्प्रत्ययः । विदारणशीलो वज्रः अस्माकमस्मदीयान् विश्वतः सर्वतः स्थितान् विश्वतः सर्वान्शत्रून् परिदर्षीष्ट परितो विदारयतु ।

170. <u>शब्दः</u>

"नरन्धिषः"

मं. परमेष्ठ्यभिधीतः प्रजापतिर्वाचि व्याहृतायामन्धो अच्छेतः

सविता सन्यां विश्वकर्मा दीक्षायां पूषा सोमक्रयण्याम् ॥54॥

<u>व्याख्याः</u>

"रध हिंसायाम्" रध्यति हिनस्ति रन्धिषः हन्ता न रन्धिषः नरन्धिषः जगत्पालको वा विष्णुः । तदा विष्णवे नरन्धिषाय स्वाहा इतिब्रूयात् ।

171. <u>शब्दः</u>

"शविष्ठा"

मंत्र सन्नः सिन्धुरवभृथायोद्यतः समुद्रोऽभ्यवह्रियमाणः सलिलः प्रप्लुतो

ययोरोजसा स्कभिता रजांसि वीर्येभिर्वीरतमा शविष्ठा ।

या पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूतौ ॥59॥

व्याख्या:

यम इति कनाम । अत्यन्तं बलवन्तौ अतिशयबलिनौ बलिष्ठौ "विन्मतोर्लुक् (पा. 5.3.65) इति विन्लोपे इष्ठनि टिलोपे बलिष्ठाविति रूपम् ।

172. शब्दः

"वितत्निरे"

मं. चतुर्हिन् शततन्तवो ये वितत्निरे य इमं यज्ञं स्वधया ददन्ते तेषां छिन्नं सम्वेतद्दधामि स्वाहा घर्मो अप्येतु देवान् (61)

व्याख्या:

तन्वन्ति प्रायश्चित्तकथनेन यज्ञं विस्तारयन्तीति तन्तवो देवाश्चतुर्हिंशत्संख्याका ये परमेष्ठ्यादय इमं यज्ञं वितत्निरे वितेनिरे वितन्वन्ति । तनोतेर्लिटि तङ्. प्रथमबहुवचने "लिटि धातोरनभ्यासस्य" (पा. 6.1.8) इति द्वित्वे "तनिपत्योश्छन्दसि" (पा. 6.4.99) उपधालोपे तत्निरे इति रूपम् ।

173. शब्दः

"वाजसाः"

मं. इन्द्रस्य वज्रोऽसि वाजसास्त्वयायं वाजं सेत् । वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे । यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म साविषत् [5]

व्याख्या:

वाजसाः वाजमन्नं सनोति ददातीति वाजसाः । "षणु दाने" विट्प्रत्ययः "विड्वनोरनुनासिकस्यात्" [पा. 6.4.41] इत्याकारः ।

174. शब्दः

"साविषत्"

व्याख्या:

सविता देवस्तस्यां भूमावेव नोऽस्माकं धर्म धारणमवस्थानं साविषत् प्रसुवतां प्रेरयतु । "षू प्रेरणे" इति धातोर्णिजन्तस्य लेटि

(1) पा. 3.1.34. ("लेटोऽडाटौ" (पा. 3.4.94) "इतश्च लोपः परस्मैपदेषु" (पा. 3.4.97) इति सूत्रैः ।

175. <u>शब्दः</u>

"जेषम्"

मं. देवस्याहं सवितुः सवे सत्यप्रसवसो बृहस्पतेर्वाजजितो वाजं जेषम् । वाजिनो वाजजितोऽध्वनः स्कभ्नुवन्तो योजना मिमानाः काष्ठां गच्छत (13)

<u>व्याख्या:</u>

बृहस्पति सम्बन्धिनं वाजमन्नं जेषं अजेषं । जयतेर्लेटि उत्तमैकवचने "लेटोऽडाटौ" (पा. 3.4.94) इत्यडागमे "सिब्बहुलं लेटि" (पा. 1.1.34) इति सिप् प्रत्ययः "इतश्च लोपः परस्मैपदेषु" (पा. 3.4.97) इति मिप इकारलोपे गुणे च जेषमिति रूपम् ।

१९६. शब्दः

"वाजमजीजपत"

मं. एषा वः सा सत्या संवागभूद्यया बृहस्पतिं वाजमजीजपताजीजपत बृहस्पतिं वाजं वनस्पतयो विमुच्यध्वम् । एषा वः सा सत्या संवागभूद्ययेन्द्रं वाजमजीजपताजीजपतेन्द्रं वाजं वनस्पतयो विमुच्यध्वम् (9.12)

व्याख्या:

यया वाचा बृहस्पतिं वाजमजीजपत । पुनर्बृहस्पतिं वाजमजीजपत "अभ्यासे भूयांसमर्थं मन्यन्ते" (नि. 10.42) इति यास्कोक्तेर्भूयानर्थो ग्राह्यः । अत्यन्तं बृहस्पतिमन्नवन्तं कारितवन्तो यूयं यया वाचा सा सत्या जातेत्यर्थः ।

मन्त्रार्थ

सप्तदश दुन्दुभीनां मध्ये मन्त्रवादितं मंत्रोपावतार यति षोडश तूष्णीं स्थापयेयुः । पूर्वो मन्त्रो विप्रयचे उत्तरः ऐन्द्रे ।

हे दुन्दुभयः, यो युष्माकमेषा वाक् तया समभूत तथा जाता ।
ययावाया बृहस्पतिं वाजमजीजपत् । पुनर्बृहस्पतिं वाजमजीजपत्
अभ्यासे भूयांसमर्थं मन्यन्ते" (नि. 10.42) इति यास्कोक्ते भूयानर्थो
ग्राह्यः । अत्यन्तं बृहस्पतिमन्नजयं कारितवन्तो यूयं यया वाचा सा
सत्याजातेत्यर्थः । जयतेर्णिजन्तस्य लुङि मध्यम बहुवचनेऽजीजपतेति रूपम्
हे वनस्पतयो वनस्पति विकारा दुन्दुभयः, यूयं विमुच्यध्वं कृतकृत्याः
सन्तो विमोचनं कुरुत । वाजे यत उत्तरो मन्त्रः । यया वाचा इन्द्रं
वाजमजीजपत् सा सत्याभूदतो यूयं विमुच्यध्वं कुरुध्वम् ।

178. शब्दः

"दधिक्रा"

मं. एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि
क्रतुं दधिक्रा अनु स सनिष्यदत्पथामङ्.का स्यन्वापनीफण-
स्फणत् । (14)

व्याख्या:

दधिक्राः दधाति अश्ववारमिति दधिः । "आदृगम"
(पा. 3.2.171) इति किप्रत्ययः । दधिः सन् क्रामत्यध्वानमिति

दधिक्रमते दधिक्रावा चारुस्पर्धतावति क्रामिणः । "अन्येभ्योऽपि दृश्यन्ते [पा. 3.2.75] इति क्वनिपि "विड्वनोः [पा. 6.4.41] इति आकारः ।

180. __शब्दः__

"अर्वन्तः"

मं. ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रवः । सहस्रसा मेधसाता सनिष्यवो महो ये धन समिथेषु जभ्रिरे [17]

__व्याख्या:__

इयर्ति कुटिलं गच्छन्तीत्यर्वन्तः । "ऋगतौ" इत्यस्माद्वनिप् "अर्वणस्त्रसावनञः [पा. 6.4.127] इति नन्तादेश एव जातः । हवनश्रुतः हवनमाह्वानं शृण्वन्तीति हवनश्रुतः । मितद्रवः यजमानचित्तानुकूल्येन परिमितगामिनः । सहस्रसाः सहस्रस्यानेकजनतुष्टिकरस्य महतोऽन्नराशेः सनितारो दातारः । मेधसाता सनिष्यवः मेधो यज्ञः तन्यो संभज्यते यत्र सा मेधसातिर्यज्ञशाला । डेऽकारः । तस्यां सनिष्यवः

संभक्तारः पुरयितारः । ते वै । येऽस्याः समितिषु संग्रामेषु महः महत्पूर्व्यं वा धनं जघ्रिरे जघ्रिरे आहृतवन्तः ।

181. शब्दः

"विनंशिनः"

मं. आपये स्वाहा स्वापये स्वाहाऽपिजाय स्वाहा क्रतवे स्वाहा मुग्धाय वैन शिनाय स्वाहा विन शिन आन्त्यायनाय स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा [20]

व्याख्या:

विनश्यन्ति इति विनंशिनः । विनाशशीलाः पदार्थाः "मस्जिनशोर्झलि नुम् [पा. 7.1.60] इति छान्दसत्वादझल्यपि नुमागमः ।

182. शब्दः

"निपदस्तु"

मं. वाजस्येमं प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट् । अदित्सन्तं दापयति प्रजानन्त्स नो रयिं सर्ववीरं नियच्छतु स्वाहा ॥24॥

व्याख्या:

रयिं धनं नियच्छतु नियमेन ददातु "दाण् दाने" "पाघ्राध्मा" [पा. 7.3.78] इत्यादिना यच्छादेशः ।

183. शब्दः

"अग्ने अच्छा"

मं. अग्ने अच्छा वदेह नः प्रति नः सुमना भव । प्र नो यच्छ सहस्रजित्त्वं हि धनदा असि स्वाहा ॥ 28॥

व्याख्या:

हे अग्ने, अस्मिन्कर्मणि नोऽस्मानच्छ वद आभिमुख्येन ब्रूहि हितमिति शेषः । "निपातस्य च" [पा. 6.3.136] इति संहितायां दीर्घोऽच्छशब्दस्य ।

184. <u>शब्दः</u>

"वर्चो धा यज्ञवाहसि"

मं. अग्ने सहस्व पृतना अभिमातीरपास्य । दुष्टरस्तरन्नरातीर्वर्चो धा यज्ञवाहसि [37]

<u>व्याख्या:</u>

यज्ञं वहतीति यज्ञवाहास्तस्मिन् यज्ञवाहसि यज्ञनिर्वाहके यजमाने वर्चोऽन्नं धाः धेहि । दधातेर्लुङि रूपम् 'बहुलं छन्दस्यमाङ्योगेऽपि [पा. 6.4.75] इत्यडभावः ।

185. <u>शब्दः</u>

" इन्द्रमनयन्नत्यरातीः"

मं. इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय । इमममुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजा [40]

व्याख्या:

याभिरद्भिर्देवा इन्द्रं देवभक्ताः शत्रून् अत्यनयन् अतीत्य नीतवन्तः इन्द्रं शत्रूनत्यक्रामयन् इत्यर्थः । "छन्दसि परेऽपि " [पा. 1.4.81] इति अतेरुपसर्गस्य क्रियापदात्परत्वम् ।

186. शब्दः

"सधमादः"

मं. सधमादो द्युम्निनीराप एता अनाधृष्टा अपस्यो वसानाः
परस्पासु वक्षु वक्षणः सधस्थमद्भा शिशुर्मातृतमा इयन्तः [7]

व्याख्या:

सधमादः सह एकस्मिन् पात्रे पान्ति हृष्यन्ति माद्यन्ते तृप्यन्ति वा ताः सधमादः । सहपूर्वान्माद्यतेः क्विप् "सध मादस्थयोश्छन्दसि " [पा. 6.3.96] इति सहस्य सधादेशः ।

187. शब्दः

"अपस्यः"

<u>व्याख्या:</u>

अप् इति कर्म नाम । अपसि कर्मणि साध्वः अपस्यः । "तत्र साधुः (पा. 4.4.98) इति यत् "सुपां सुलुक् (पा. 7.1.39) इति जसः लुगादेशः ।

188. <u>शब्दः</u>

"स्वसिचः इयानाः"

मं. प्र पर्वतस्य वृषभस्य पृष्ठान्नावश्चरन्ति स्वसिच इयानाः ।
ता आववृत्रन्नधरागुदक्ता अहिर्बुध्न्यमनु रीयमाणाः ।
विष्णोर्विक्रमणमसि विष्णोर्वि क्रान्तमसि विष्णोः क्रान्तमसि (19)

<u>व्याख्या:</u>

स्वसिचः स्वेनैवात्मनैव सिंचन्ति विश्वमभिषिंचन्ति स्वसिचः तथा इयानाः गन्तारोत्येवंशीला इयानाः । एतेः "ताच्छील्य वयोवचनशक्तिषु चानश् (पा. 3.2.129) इति चानश्प्रत्ययः चित्वा-दन्तोदात्तं पदम् ।

189. <u>शब्दः</u>

"वज्रहस्त"

मं. मा त इन्द्र ते वयं तुराषाडयुक्तासो अब्रह्मता विदसाम

तिष्ठा रथमधि यं वज्रहस्ता रश्मीन्देव यमसे स्वश्वान्॥[22]

<u>व्याख्या:</u>

हे वज्रहस्त, वज्रं हस्ते यस्य तत्संबुद्धिः हे देव दीप्यमान, त्वं यं रथमधितिष्ठ तस्मै मोद । अधितिष्ठसि । द्व्यचोऽतस्तिङः:" [पा. 6.3.135] इति दीर्घः । यस्य च रश्मीन्प्रग्रहानायमसे आयच्छसि ।

190. <u>शब्दः</u>

"निषसाद"

मं. निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः [27]

<u>व्याख्या:</u>

विशो वै पस्त्याः" [5.4.4.5] इति श्रुतेः । आभिमुख्येनोपविवेश । यदासन्नां निषण्णः स प्रजास्वेव निषण्ण इत्यर्थः । "छन्दसि-

ताश्च" (पा. 1.4.82) इति आङ्. उपसर्गस्य क्रियापदेन व्यवधानम् ।

191. शब्दः

"शुभस्पती"

मं. युवं सुराममश्विना नमुचावासुरे सचा । विपिपाना
शुभस्पती इन्द्रं कर्मस्वावतम् (33)

व्याख्या:

शुभः पती शोभनं शुभ् "शुभ दीप्तौ" इत्यस्मात् संपदादित्वात् भावे क्विप् तस्य शुभः शोभनस्य कर्मणः पती पालकौ । "षष्ठ्याः पतिपुत्र" (पा. 8.3.53) इत्यादिना पतिशब्दे परे विसर्गस्य सकारः (33)

192. शब्दः

"दंसनाभिः"

मं. पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दंसनाभिः ।
यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् (34)

<u>व्याख्या:</u>

दंस इति कर्मनाम । दंसतः करणं दंसना "तत्करोति तदाचष्टे" [पा. 3.3.26] इति णिचि जाते "ण्यासश्रन्थो युच् [पा. 3.3.107] इति युच् प्रत्यये दंसनेति रूपम् जातम् ।

193. <u>शब्दः</u>

"अभिष्णक्"

<u>व्याख्या:</u>

भिष्णज् उपसेवायाम्" कण्ड्वादिः अस्मात्लङि, कण्ड्वादिभ्यो यक्" [पा. 3.1.27] इति प्राप्तस्य यको व्यत्ययेन लुक् "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" [पा. 6.1.68] इति तिपो लुक् "लुङ्लङ्लृ-ङ्क्ष्वडुदात्तः" [पा. 6.4.71] अडागमः " वावसाने" [पा. 8.4.56] इति जकारस्य ककारः अभिष्णगिति जातम् ।

194. <u>शब्दः</u>

"तत्वाय"

मं. युञ्जानः प्रथमं मनस्तत्वाय सविता धियः । अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥1॥

व्याख्या:

धियो बुद्धीरिष्टकार्यविषयाणि कर्माणि तत्वाय तनित्वा । विस्तार्य मनसा पर्यालोच्य बुद्धयाधार्येत्यर्थः । "तनु विस्तारे" "समानकर्तृकयोः पूर्वकाले [पा. 6.4.21] इति क्त्वा-प्रत्ययः । अनित्यमागमशासनमितीडागमाभावः । "अनुदात्तोपदेश [पा. 6.4.37] इत्यादिना नलोपः "क्त्वो यक्" [पा. 7.1.47] इति क्त्वाप्रत्ययान्तस्य यगागमः ।

195. शब्दः

"दिवम्"

मं. युक्त्वाय सविता देवान्स्वर्यतो धिया दिवम् । बृहज्ज्योतिः
करिष्यतः सविता प्रसुवाति तान् [3]

व्याख्या:

दिवं दीव्यति प्रकाशत इति दिवम् "इगुपध-" [पा. 3.1.135] इति कप्रत्ययः । द्योतनं स्वः स्वर्गं यतो गच्छतः ।

196. शब्दः

"वयुनावित्"

मं. युंजते मन उत युंजते धियो विप्रा विप्रस्य बृहतो विपश्चितः
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥4॥

व्याख्या:

"वयुनावित्" वयुनानि प्रज्ञानानि वेत्तीति वयुनावित् "अन्येषामपि दृश्यते (पा. 6.3.137) इति दीर्घः विपश्चित् विविधयजमानाभिप्रायज्ञः ।

197. शब्दः

"पुरीष्यम्"

मं. देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्
आददे गायत्रेण छन्दसाङ्गिरस्वत्पृथिव्याः सधस्थादग्निं
पुरीष्यमङ्गिरस्वदाभर त्रैष्टुभेन छन्दसाङ्गिरस्वत् ॥9॥

व्याख्या:

पुरीष्यं "पशवो वै पुरीषम्" [6.3.1.38] इति श्रुतेः पुरीषेभ्यः पशुभ्यो हितः पुरीष्यस्तं पशव्यम् । यद्वा पुरीषशब्देन पांशुरूपा शुष्का मृदुच्यते तदर्हतीति पुरीष्योऽग्निः मृदमादायोखां कृत्वा तस्यामग्निः स्थाप्यते ।

198. शब्दः

"तवस्तरं"

मं. योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ॥14॥

व्याख्या:

तवस्तरं बलवत्तरमुत्साहवन्तम् तव इति बलनाम । तवो बलमस्यास्तीति तवस्वि "अस्मायामे–" [पा. 5.2.121] इत्यादिना विनि । अत्यन्तं तवस्वि तवस्तरस्तम् । अतिशये तरप् "विन्मतोर्लुक्" [पा. 5.3.65] इति तरपि विनो लुक् ।

199. शब्दः

"आततन्थ"

मं. अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः ।

अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततन्थ [17]

व्याख्या:

आततन्थ आतेनिथ आततान सर्वतो व्याप्तवान् । "व्यत्ययो बहुलम् [पा. 3.1.85] इति पुरुष व्यत्ययः "बभूथाततन्थ" - [पा. 3.1.85] इति पुरुषव्यत्ययः "बभूथाततन्थ-[पा. 7.2.64] इत्यादिना निपातः ।

190. शब्दः

"पृतन्यतः"

मं. द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्ष समुद्रो योनिः ।

विख्याय चक्षुषा त्वमभि तिष्ठ पृतन्यतः [20]

व्याख्या:

पृतन्यतः संग्रामं कर्तुमिच्छतः शत्रून् राक्षसादीनित्यर्थं इति

मूर्धं स्थितानभितिष्ठ पादैराक्रम्य स्थिताय । पृतनाभिलषन्ति "सुप आत्मनः क्यच्" [पा. 3.1.8] "कव्यध्वरपृतनस्यर्चि लोपः" [पा. 7.4.39] इति क्यचि परे पृतनाशब्दस्यान्त्य लोपः ततः शतृ प्रत्ययः ।

191. <u>पृथुः</u>

"व्यचिष्ठम्"

मं. आ त्वा विधर्मि मनसा घृतेन प्रतिक्षियन्तं भुवनानि विश्वा ।
पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नै रभसं दृशानम् ॥ 23॥

व्याख्या:

व्यचिष्ठं व्यचनं व्याप्तो ऽवकाशः सोऽस्यास्तीति व्यचस्वान् अतिशयेन व्यचस्वान् अतिशयेन व्यचस्वान् व्यचिष्ठः । "अतिशायने तमबिष्ठनौ" [पा. 5.3.55] इतीष्ठन् "विन्मतोर्लुक्" [पा. 5.3.65] इतीष्ठनि परे मतुपो लुक् ।

192. <u>शब्दः</u>

"दधद् रत्नानि दाशुषे"

मं. परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे {25}

<u>व्याख्या:</u>

दाशुषे हवींषि दत्तवते यजमानाय रत्नानि रमणीयानि धनानि दधद् प्रयच्छन् । "दाशृ दाने" अस्य धातोः दाश्वान्साह्वान्-" {पा. 6.1.12.} इत्यादिना क्वसुप्रत्ययान्तो निपातः ।

193. <u>शब्दः</u>

"पुरं"

मं. परि त्वाग्ने पुरं वयं विप्रं सहस्य धीमहि । धृषद्वर्णं दिवेदिवे हन्तारं भङ्गुरावताम् {26}

<u>व्याख्या:</u>

पुरं पुरोरूपेण स्थितम् आग्नेयादिपुराणां रक्षकत्वात्, यद्वा

पिपर्ति पालयतीति पूरतम् । पॄ पालनपूरणयोः" क्विप् "उदोष्ठ्य-पूर्वस्य (पा. 7.1.102.) इति उदादेशे पुरिति रूपम् ।

194. शब्दः

" वरिम्णा"

मं. अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम् । वर्धमानो महाँ 2 ऽआ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्व (29)

व्याख्या:

उरोर्भावो वरिमा तेन वरिम्णा " प्रस्थस्फ" (पा. 6.4.157) इत्यादिना उरोर्वरादेशः इमनि । उरुत्वेन त्वं प्रथस्व विस्तृतं भव ।

195. शब्दः

"छिद्रे "

मं. शर्म च स्थो वर्म च स्थोऽच्छिद्रे बहुले उभे । व्यचस्वती संवसाथां भृतमग्निं पुरीष्यम् (30).

व्याख्या:

संवसाथां सम्यगाच्छादयतम् । "वस आच्छादने" अदादिः ।

आच्छाद याग्निं श्रुतं विश्रुतं धारयतम् । विभर्तेः "बहुलं छन्दसि" [पा. 2.4.73] इति शपो लुक् ।

196. <u>शब्दः</u>

"वृत्रहणं पुरन्दरम्"

मं. तमु त्वा दध्यङ्.ङृ.षिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरन्दरम् [33]

<u>व्याख्या:</u>

वृत्रहणं वृत्रस्य पाप्मनो हन्तारम् । "ब्रह्मभ्रूणवृत्रेषु हनः" इति [पा. 3.2.87] क्विप् । पुरन्दरं शत्रुरूपेणासुरसंबन्धिनां नगराणां विदारयितारम् । "वाचंयमपुरन्दरौ च" [पा. 6.3.69] इति खशि निपातः ।

197. <u>शब्दः</u>

"दीदिवान्"

मं. नि होता होतृषदने विदानस्त्वेषो दीदिवाँ असदत्सुदक्षः

अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निः {56}

<u>व्याख्या:</u>

दीदिवान् दीव्यतीति दीदिवान् "दिवु क्रीडादौ" अस्मात् क्वसुः । "तुजादीनां दीर्घोऽभ्यासस्य" {पा. 6.1.7} इत्यभ्यासदीर्घः ।

198. <u>शब्दः</u>

" कनिक्रदद्गाः "

मं. स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु ।
चित्रः शिशुः परि तमा स्यक्तून्प्र मातृभ्यो अधि कनिक्रदद्गाः {43}

<u>व्याख्या:</u>

कनिक्रदत् अत्यन्तं शब्दं कुर्वन् प्रगाः प्रकर्षेण गच्छ । "इणो गा लुङि" {पा. 2.4.45} इति गादेशः अडभावश्छान्दसः "छन्दसि लुङ्लङ्लिटः" {पा. 3.4.6} इति सर्वकाले लुङ् । प्रेत्युपसर्गो गा इत्यनेन

संबध्यते । "दाधर्तिदर्धर्ति-" [पा. 7.4.65] इत्यादिना कनिक्रददिति यङ्लुगन्तो निपातः ।

199. <u>शब्दः</u>

"पुरीषवाहणः"

मं. स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् । पृथुर्भव सुषदस्त्व-
मग्नेः पुरीषवाहणः [44]

<u>व्याख्या:</u>

पुरीषवा हणः पुरीषशब्देन पांशुरूपा मृदुच्यते तां वहतीति पुरीषं पशव्यं पदार्थं वहतीति वा पुरीषवाहणः । "कव्यपुरीषपुरीष्येषु ञ्युट्" [पा. 3.2.65] इति ञ्युट्प्रत्ययः ।

200. <u>शब्दः</u>

"रासभः"

मं. प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा भरन्नग्निं पुरीष्यं

मा पाद्यायुषः पुरा । वृषाग्निं वृषणं भरन्नपां गर्भं समुद्रियम् ।
अग्न आयाहि वीतये ॥46॥

व्याख्या:

रासभः गर्दभः कीदृशो रासभः । पत्वा पतनशीलः" पत्लृगतौ इत्यस्मात्" अन्येभ्योऽपि दृश्यन्ते" [पा. 3.2.75] इति वनिप् । अश्वमन्ये रासभोपादानं रासभोपहासार्थम् ।

201. शब्दः

"उशतीरिवमातरः"

मं. यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥51॥

व्याख्या:

उशतीर्मातर इव उशन्ति ता उशत्यः वा छन्दसि" [पा. 6.1.106] इति दीर्घः । "वश कान्तौ" [पा. 6.1.106] इत्यस्मात् शतृप्रत्ययान्तात् "उगितश्च" [पा. 4.1.6] इति ङीप् । उशत्यः कामयमानाः प्रीतियुक्ता मातरो यथा स्वकीयस्तन्यरसं बालं पाययन्ति तद्वत् ।

202. छन्दः

"श्रपयान्"

मं. अदित्यै रास्नास्यदितिष्टे बिलं गृभ्णातु । कृत्वाय सा मही-
मुखां मृन्मयीं योनिमग्नये । पुत्रेभ्यः प्रायच्छददितिः श्रपयानिति ॥59॥

व्याख्या:

श्रपयान् श्रपयन्तु । श्रा पाके" ण्यन्तः । हे पुत्राः
उखामुखां अग्नेः श्रपयन्तु पचन्तु । "इतश्च लोपः परस्मैपदेषु"
[पा. 3.4.97] इति अन्तोत्यस्येकारलोपे संयोगान्तलोपे च लेटोऽडाटौ"
[पा. 3.4.94] इत्यडागमे श्रपयानिति रूपम् ।

203. छन्दः

"इरम्मदम्"

मं. नाभा पृथिव्याः समिधाने अग्नौ रायस्पोषाय बृहते हवामहे ।
इरम्मदं बृहदुक्थं यजत्रं जेतारमग्निं पृतनासु सासहिम् ॥76॥

<u>व्याख्या:</u>

इरंमदम् इरया अन्नेन माद्यति तृप्यति हृष्यतीति इरंमदस्तम् "उग्रम्पश्य–" {पा. 3.3.37} इत्यादिना खशि निपातः ।

204. <u>शब्द:</u>

"अभित्वरी"

मं. याः सेना अभीत्वरीराव्याधिनीरुगणा उत । ये स्तेना ये च तस्करास्तांस्ते अग्नेऽपि दधाम्यास्ये {77}

<u>व्याख्या:</u>

या काश्चित्परकीयाः सेनाः अभीत्वरीरभीत्वर्यः अभियायिन्यः अस्मदाभिमुख्येनागमनशीलाः अभियान्ति ता अभित्वर्यः । "इणनशजिसर्तिभ्यः क्वरप् {पा. 6.1.71} इति तुक् टिड्ढाणञ्–{पा. 4.1.15} इत्यादिना ङीप् ।

205. <u>शब्दः</u>

"अघायवः"

मं. ये जनेषु मलिम्लवः स्तेनासस्तस्करा वने ये कक्षे अघायवस्तांस्ते दधामि जम्भयोः [79]

<u>व्याख्या:</u>

अघं परस्येच्छन्ति ते अघायवः "छन्दसि परेच्छायामिति वक्तव्यम्" इति अघशब्दात् क्यच्। "क्याच्छन्दसि" [पा. 3.2.170] इति उप्रत्ययः।

206. <u>शब्दः</u>

"द्वेषते जनः"

मं. यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः निन्दाद्यो अस्मान्धिप्साच्च सर्वं तं भस्मसा कुरु [80]

<u>व्याख्या:</u>

यश्च जनो नोऽस्मान्द्वेषते कार्यनाशेनाप्रीतिमुत्पादयति "द्विष अप्रीतौ" "बहुलं छन्दसि" [पा. 2.4.73] इति शपो लुगभावः।

207. शब्दः

"रुचानः"

मं. शुचानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः । अग्निरमृतो
अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः ॥1॥

व्याख्या:

रुचानः रोचत इति रुचानो वह्निः । रोचतेः शानचि "बहुलं छन्दसि" [पा. 2.4.73] इति शपो लुक् सोऽयमग्निर्वयोभिरन्नैः पशुपुरोडाशप्रभृतिभिरमृतोऽमरणधर्मा अभवत् ।

208. शब्दः

"द्रविणोदाः"

मं. नक्तोषासा समनसा विरूपे धापयेते शिशुमेकं समीची ।
द्यावाक्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन्द्रविणोदाः ॥2॥

व्याख्या:

द्रविणोदाः यागद्वारेण द्रविणं धनरूपं फलं ददति प्रयच्छन्ति ते । तमहं धारयामीति शेषः । "अग्निं धारयन् द्रविणोदा इत्याह प्राणा वै देवा द्रविणोदाः" इति तैत्तिरीयश्रुतेर्देवशब्देन प्राणा उच्यन्ते ।

209. शब्दः

"क्षामा"

मं. क्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन्
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः {6}

व्याख्या:

क्षामा रेरिहत् "सुपां सुलुक्" {पा. 7.1.39} इति विभक्ति लोपः क्षामेति पृथिवीनामसु पठितम् ।

210. शब्दः

"अदितये स्याम"

मं. उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय । अथा
वयमादित्य व्रते तवानागसो अदितये स्याम ।

व्याख्या:

वयमदितये अदीनतायै स्याम अखण्डितत्वाय योग्या भवेम ।

211. <u>शब्दः</u>

"स्वं योनिमिहासदः"

मं. शिवो भूत्वा मह्यमग्ने अथो सीद शिवस्त्वम् । शिवाः
कृत्वा दिशः सर्वाः स्वं योनिमिहासदः {17}

<u>व्याख्या:</u>

स्वंयोनि स्वकीयं स्थानं मासदः आसीद आगत्योपविश ।
छन्दसि लुङ्‌लङ्‌लिटः {पा. 3.4.6} इति लोट अर्थे लुङ् ।

212. <u>शब्दः</u>

"भरिभ्रत् "

मं. उशिक् पावको अरतिः सुमेधा मर्त्येष्वग्निरमृतो निधायि।
इयर्तिधूममरुषं भरिभ्रदुच्छुक्रेण शो चिषा द्यामिनक्षत् {24}

<u>व्याख्या:</u>

भरिभ्रत् बिभ्रत् जगत्धारयन् "दाधर्ति"- {पा. 7.4.65} इत्या-
दिनां निपातः ।

213. <u>शब्दः</u>

"वस्य"

मं. यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने । प्र तं नय प्रतरं वस्यो अच्छाभि सुम्नं देवभक्तं यविष्ठ ॥26॥

<u>व्याख्या:</u>

अतिशयेन वसु वसीयः "तुश्छन्दसि" ॥ पा. 5.3.69॥ ईयसुन् तुरिष्ठेमेयःसु " ॥ पा. 6.4.154॥ इति तुचो लोपः । छान्दसे छान्दसो ईलोपे वस्य इति ।

214. <u>शब्दः</u>

"वसुदावन्"

मं. प्र प्रायमग्निर्भरतस्य शृण्वे वि यत्सूर्यो न रोचते बृहद्भाः । अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः ॥34॥

<u>व्याख्या:</u>

हे वसुपते धनपते हे वसुदावन्, वसुददाति इति वसुदावा ।

असतो मनिन् - [पा. 3.2.74] इति कुनिप् तत्सम्बुद्धौ हे बहुदावन्
धनस्य दातः ।

215. शब्दः

"वावशानः"

मं. अध सो अग्निर्यस्मिन्सोममिन्द्रः सुत दधे जठरे वावशानः ।
सहस्रिणं वाजमत्यं न सप्तिं ससवान्सन्स्तूयते जातवेदः [47]

व्याख्या:

किं सुतमिन्द्रः वाचमानः वष्टीति वावशानः "बहुलंछन्दसि"
[पा. 2.4.76] इति श्रपः श्लौ सति द्वित्वे अभ्यासदीर्घे शानचि
रूपम् ।

216. शब्दः

""उर्वन्तरिक्ष"

मं. अग्ने यत्ते दिवि वर्चः पृथिव्यां यदोषधीष्वप्स्वा यजत्र ।
येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः [48]

व्याख्या:

विततोर्णमन्तरिक्षमाततन्थ आततनोति वितारयति ।

"बभूथाततन्थ" [पा. 7.2.64] इतिडभावः ।

217. शब्दः

"विजावा ।"

मं. इडामग्ने पुरुद स सनि गोः शश्वत्तम हव मानाय साध

स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥5॥

व्याख्या:

विजावा विविधं जायते, पुत्रादिद्वारेति विजावा

प्रजावान् " विड्वनोरनुनासिकस्यात् [पा. 6.4.41] इति

धातो-राकारः ।

218. **शब्दः**

"रथीतमम्"

मं. इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः । रथीतमं रथीनां वाजानां सत्पतिं पतिम् [56]

**व्याख्या:**

रथीनां रथयुक्तानां सर्वेषां मध्ये रथीतमं अत्यन्तं रथयुक्तं रथयुतं रथयुक्तेष्वधातिशयमित्यर्थः । "ईद्रथिनः" [ पा. 8. 2. 17]

इति घे परे रथिन ईदादेशः ।

219. **शब्दः**

"संप्रियौ सम्प्रीषोतत्तौ"

मं. समित संकल्पेथा संप्रियौ रोचिष्णू सुमन स्यमानौ ।

इषमूर्जमभि संवसानौ [57]

219. शब्दः

व्याख्या:

संप्रियौ सम्प्रीणीतस्तौ " इगुपध " (पा. 3.1.135) इति कः । सम्यक् परस्परं प्रीतियुक्तौ ।

220. शब्दः

"रोचिष्णू सुमनस्यमानौ"

व्याख्या:

रोचिष्णू दीप्यन्तौ दीप्यमानौ "अलंकृञ्" "(पा. 3/2/136 इत्यादिना इष्णुच् । शोभनं मनः कुरुतस्तौ । वा सुमनस्येते तौ सुमनस्यमानौ ।

221. शब्दः

"विद्युतावन्धमेतम्"

मं. नमः सु ते निर्ऋते तिग्मतेजोऽयस्मयं विचृता बन्धमेतम् ।
यमेन त्वं यम्या संविदानोत्तमे नाके अधिरोहयैनम् (63)

व्याख्या:

लोहपाशमद्युक्तेति बन्धं वौयस्येन बन्धमुक्तिरूपम् अग्ने त्वं विचृत विच्छिन्धि नाशय । "चृती ग्रन्थे" तुदादिः । द्व्यचोऽतस्तिङः (पा. 6.3.135) इति संहितायां दीर्घः ।

222. सुम्नः

"देवेषु सुम्नया"

मं. सीता युंजन्ति कवयो युगा वितन्वते पृथक् । धीरा देवेषु सुम्नया (67)

व्याख्या:

देवेषु सुम्नयां सुम्नमिति सुखनाम । ततो द्वितीयैकवचनस्य "सुपां सुलुक्" (पा. 7.1.39) इति या देशः । सुम्नम् सुखकर्तुमिति शेषः ।

223. शब्दः

"युनक्त सीरा"

मं. युनक्त सीरा वियुगा तनुध्वं कृते योनौ वपतेह बीजम् ।
विरा च श्नुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमायात् (68)

व्याख्या:

हे कर्षकाः सीराः सीराणि हलानि युनक्त युङ्क्त योजयत । तप्तनप्तनथनाश्च" (पा. 7.1.45) इति तस्य तबादेशे श्नसोरल्लोपाभावे युनक्तेति रूपम् ।

224. शब्दः

" शुनासीरौ"

मं. शुनं सुफाला विकृषन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः । शुनासीरा हविषातोशमाना सुपिप्पला ओषधीः कर्तनास्मे (69)

<u>व्याख्या:</u>

शुनश्च सीरश्च शुनासीरौ "देवताद्वन्द्वे च" (पा. 6.3.26) इति पूर्वपददीर्घ/: । शुनो वायुः सीर आदित्यः । "शुनो वायुः शु इत्यन्तरिक्षे सीर आदित्यः सरणात्" (निरु. 9.40) इति यास्कोक्तेः ।

225. <u>प्रतीक:</u>

पयसाभ्याववृत्स्व"

मं. घृतेन सीता मधुना समज्यतां विश्वैर्देवैरनुमता मरुद्भिः ।
ऊर्जस्वती पयसा पिन्वमानास्मान्सीते पयसाभ्याववृत्स्व (70)

<u>व्याख्या:</u>

पयसा दुग्धादिभिः सह अभ्याववृत्स्व अस्मदभिमुखमावृत्ता भव । अस्माकमनुकूला भवेत्यर्थः । वृतेः " बहुलं छन्दसि "

| पा. 2.4.76 | इति शपः श्लौ सति लोटि बहुलस्येति रूपम् ।

226. शब्दः

"सोमपित्सरु"

मं. लाङ्गलं पवीरवत्सुशेवं सोमपित्सरु । तदुद्वपति गामविं प्रफर्व्यं च पीवरीं प्रस्थावद्रथवाहणं | 7 |

व्याख्या:

सोमपि यजमाननिमित्तं त्सरति भूमिं खनतीति सोमपित्सरु। यद्वा सोमपि यजमाने त्सरति नाशयति बाधमिति सोमपित्सरु । त्सर छद्मगतौ" इति धातोरुप्रत्ययः शीलार्थः । "हलदन्तात्सप्तम्याः" | पा. 6.3.9 | इति आलोपे हलन्तत्वात् यद्वा सोमः पीयतेऽनेनेति सोमपि मता स्युः । ईदृशी लाङ्गलं गवादि गमयतीत्यर्थः । कीदृशी गामवि च ।

227. <u>शब्दः</u>

"वीरुधः"

मं. ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः ।
अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥77॥

<u>व्याख्या:</u>

वीरुधः विविधं रुन्धन्ति निवारयन्ति व्याधिमिति वीरुधः "नहिवृतिवृषि-" [पा. 6.3.116] इत्यादिना उपसर्गदीर्घः ।

228. <u>शब्दः</u>

"पारयिष्णवः"

<u>व्याख्या:</u>

पारयिष्णवः "पार तीर कर्मसमाप्तौ" चुरादिरदन्तो धातुः पारयन्ति अल्पकालं परित्यज्य बहुकालं कर्मपरायणशीलाः

धारयिष्णवः 'णेश्छन्दसि' (पा. 3.2.137) इतीष्णुच्प्रत्ययः ।

229. <u>शब्दः</u>

'उग्रौ मध्यमशीरिव'

मं. यस्यौषधीः प्रसर्पथाङ्गमङ्गं परुष्परुः । ततो

यक्ष्मं विबाधध्व उग्रौ मध्यमशीरिव (86)

<u>व्याख्या:</u>

उग्रौ मध्यमशीरिव मध्ये देहमध्ये अव मध्यमं मर्मभागं शृणाति हिनस्ति मध्यमशीः 'शॄ हिंसायाम्' क्विप् । 'ऋत इद्धातोः' (पा. 7.1.100) इति इदादेशः 'उरण् रपरः' (पा. 1.1.51) इति रेफः ।

230. शब्दः

"शतवल्शा विरोहतात्"

मं. दीर्घायुत्व ओषधे खनिता यस्मै च त्वा खनाम्यहम्

अथो त्वं दीर्घायुर्भूत्वा शतवल्शा विरोहतात् ॥100॥

व्याख्या:

त्वं शतवल्शा बहङ्कुरा सती विरोहतात् विरोह बह्वङ्कु-रोत्पत्त्या तुह्योस्तातङ् ॥ पा. 7.1.35॥ इति तातङ् ।
वल्शशब्दोऽङ्कुरवाची ।

231. शब्दः

"धिष्व"

मं. सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः । आप्यायमानो अमृताय सोमदिवो श्रवांस्युत्त-मानि धिष्व ॥113॥

व्याख्या:

धिष्व धारय संपादय लोकद्वयभोगं संपादयेत्यर्थः । धि धारणे तुदादिः विकरणव्यत्ययः आत्मनेपदं च छान्दसम् "बहुलं छन्दसि" (पा. 2.4.73) इत्युक्ते "सुधितवसुधित" (पा. 7.4.45) इति सूत्रेण दधातेर्निपातो वा धत्स्वेत्यर्थः ।

232. शब्दः

"यमत्"

मं. आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात् ।
अग्ने त्वां कामया गिरा ॥ 15॥

व्याख्या:

आयमत् आयच्छति गृह्णाति मनोनिग्रहं करोतीत्यर्थः । इतश्च लोपः (पा. 3.4.97) इति इकारलोपे यमदिति रूपम् ।

233. <u>शब्दः</u>

"विवः"

मं. ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः [5]

<u>व्याख्या:</u>

विवः प्रकाशयति। वृणोतेः शपि लुप्ते लङि. वृञ् च च इति रूपम् अडभाव आर्षः । 'बहुलं छन्दस्यमाङ्योगेऽपि [ पा. 6. 4. 75] इति वचनात् ।

234. <u>शब्दः</u>

"प्रसितिं"

मं. कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः [1]

व्याख्या:

प्रसितिवर्णिषु "प्रसितिः प्रसयनात्तन्तुर्वा जालं वा" [नि. 6.12] इति यास्कोक्तेः। "षिञ् बन्धने प्रपूर्वः सीयन्ते बध्यन्ते पक्षिणो यया सा प्रसितिः ताम्।

235. शुक्रः

स्वर्षाम्

ऋ. भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः

दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् [15]

व्याख्या:

स्वर्षां स्वः स्वर्गं सनोति ददाति इति स्वर्षाः "षणु दाने" विट् प्रत्ययः। "विड्वनोरनुनासिकस्यात्" [पा. 6.4.41] इति नकारस्याकारः।

236. <u>शब्दः</u>

"रोहम्"

मं. अग्नौ ह यन्नेरजनिष्ट शोकात्तो अपश्यज्जनितारमग्रे ।
तेन देवा देवतामग्रमायंस्तेन रोहमायन्नुप मेध्यासः ॥
शरभमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद ।
शरभं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ।

<u>व्याख्या:</u>

रोहं रोहणीयं स्वर्गं तेनातैनोपायेनानुपगच्छन्ति । "छन्दसि परेऽपि" [पा. 1.4.81] इति । शरभोऽष्टापदो मृगविशेष सिंह-घाती ।

237. <u>शब्दः</u>

"लुशा"

मं. स्वर्देवैर्दधिषितेह सीद देवाना सुम्ने बृहते रणाय ।

पितेवैधि सूनव आ सुशेवा स्वावेशा तन्वा संविशस्वाश्वि-

नाध्वर्यू सादयतामिह त्वा ॥3॥

**व्याख्या:**

आसमन्ताद्भावेन सुशेवा शोभनं शेवं सुखं यस्यास्तादृशी सर्वदा सुखयित्री एधि भव "घ्वसोरेद्धौ-" (पा. 6.4.119) इत्येकारः ।

238. **शब्द:**

*सुमनस्यमानः

मं. सहसा जातान्प्रणुदा नः सपत्नान्प्रत्यजातान्

जातवेदो नुदस्व । अधि नो ब्रूहि सुमनस्यमानो वय

स्याम प्रणुदा नः सपत्नान् ॥2॥

**व्याख्या:**

शोभनं मनो यस्य सुमना असुमनाः सुमना भवति सुमनस्यमानः "भृशादिभ्यः" (पा. 3.1.12) इति क्यङ् ततः शानच् ।

239. शब्दः*

* "सेनजिच्च सुषेणश्च"

मं. अयमुपर्यर्वाग्वसुस्तस्य सेनाजिच्च सेनानीग्रामण्यावुर्वशी च
पूर्वचित्तिश्चाप्सरसावक्स्फूर्जन् हेतिर्विद्युत्प्रहेतिस्तेभ्यो
नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च
नो द्वेष्टि तमेषां जम्भे दध्मः ।19।

**व्याख्या:**

पर्जन्यस्य सेनां जयतीति सेनजित् शोभना सेना यस्येति सुषेणः पूर्वपदात् (पा. 8.3.106) इति षत्वम् ततो णत्वम् ।

240. शब्दः

" जनस्य गोपा"

मं. जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ।

घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यः शुचिः [27]

व्याख्या:

जनस्य यजमानस्य गोपाः । गोपायति रक्षतीति गोपाः

विच् " लोपो व्योर्वलि [पा. 6.1.66] इति यलोपः ।

241. शब्दः

वर्षिष्ठाय"

मं. सखायः सं वः सम्यञ्चमिषं स्तोमं चाग्नये वर्षिष्ठाय

क्षितीनामूर्जो नप्त्रे सहस्वते ।

<u>व्याख्या:</u>

बंहिष्ठाय ज्येष्ठाय बहुतमाय । 'प्रियस्थिर' {पा. 6.4.157} इत्यादिना बहुलस्य बंहि देशः इष्ठनि च ।

242. <u>हवन्ते</u>

"हवन्ते विक्षु"

मं. त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः । शो
चिष्केशं पुरुप्रियाग्ने हव्याय वोळ्हवे {31}

<u>व्याख्या:</u>

हे अग्ने, विक्षु प्रजासु ऋत्विजः यजमानाः त्वां हवन्ते आह्वयन्ति । ह्वेञ् आह्वाने ह्वः सम्प्रसारणम् {पा. 6.1.33} इति शपि सम्प्रसारणं गुणश्च ।

246. शब्दः

"दविद्युत्"

मं. आ यतो मध्वमद्युरण्युरयमग्निः सत्पतिः श्चेकितानः ।
पृष्ठे पृथिव्या निहितो दविद्युतदधस्पदं कृणुता ये पृतन्यवः ॥51॥

<u>व्याख्या:</u>

दविद्युतद्द्योतमानः "दाधर्ति- [पा. 7.4.65] इत्यादिना यङ्लुकि शतरि निपातः ।

247. शब्दः

" देवयानान्"

मं. सम्प्रच्यवध्वमुप संप्रयाताग्ने पथो देवयानान् कृणुध्वम् । पुनः
कृण्वानाः पितरा युवानान्वाता सीत्त्वयि तन्तुमेतम् ॥53॥

250. शब्दः

"मीढुषे"

मं. नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ।
अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः (8)

व्याख्या:

मीढुषे मिमेहेति मीढ्वान् तस्मै "मिह सेचने" "दाश्वान्साह्वान्मीढ्वांश्च (पा. 6.1.12) इति क्वसन्तो निपातः ।

251. शब्दः

"मृगयुभ्यश्च वो नमः"

मं. नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमो नमः श्वनिभ्यो मृगयुभ्यश्च वो नमः (27)

<u>व्याख्या:</u>

सुनान् कामयन्तो ते सुनयवः । "इषुंरिदं कामयमानः स्मय (निरु. 6.31) इति यास्कोक्तेः । "सुप आत्मनः क्यच्" (पा. 3.1.8) इति क्यच् "क्यचि च (पा. 7.4.33) इति प्राप्त-स्येत्वस्य " न छन्दस्यपुत्रस्य (पा. 7.4.35) इति निषेधः । सुनयवो कुक्कारोत्सवो वो नमः (27)

252. <u>शतः</u>

"शत धर्षणे "

मं. नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने

च नमो गिरिशयाय च शिपिविष्टाय च नमो मीढुष्टमाय

चेषुमते च (29)

<u>व्याख्या:</u>

शतं धनूंषि यस्य शतधन्वा " धनुषश्च (पा. 5.4.132)

इत्यानङ्. तस्मै बहुधनुर्धारिणे नमः ।

255. <u>शब्दः</u>

"ज्येष्ठाय च कनिष्ठाय चनमः"

मं. नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय
च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्न्याय
च ॥ 32॥

<u>व्याख्या:</u>

वयोवस्था विशेषमिधायकाः षड् नमस्काराः ।

अत्यन्तं प्रशस्यो ज्येष्ठस्तस्मै नमः । ज्य च ॥ पा. 5.3.61॥
इति प्रशस्य शब्दस्येष्ठति ज्यादेशः । अत्यन्तं युवाल्पो वा
कनिष्ठस्तस्मै नमः । "युवाल्पयोः कनन्यतरस्याम्" ॥ पा. 5.64॥
इति कनादेश तस्मै शिवाय नमः ।

254. शब्दः

"प्रमृशाय"

मं. नमो धृष्णवे च प्रमृशाय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने च नमः स्वायुधाय च सुधन्वने च ॥ 36॥

व्याख्या:

प्रमृशति विचारयतीति प्रमृशः पण्डितः तस्मै प्रमृशाय । इगुपध-(अष्टा. 3.1.135) इति कः ।

255. शब्दः

"नीप्याय"

मं. नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः कुल्याय च सरस्याय च नमो नादेयाय च वैशन्ताय च ॥ 37॥

व्याख्या:

नीचैः पतन्त्यापो यस्मिन्निति नीपो गिर्यधोभागः। ऋक्पूरब्धू-पथाम्- [पा. 5.4.74] इत्यप्रत्ययः" द्व्यन्तरुपसर्गेभ्योऽप ईत् [पा. 6.3.97] इत्यपशब्दस्यैकारः तत्र भवा नीप्यः तस्मै ।

256. शब्दः

"हनीयसे"

मं. नमः शंगवे च पशुपतये च नम उग्राय च भीमाय च नमोऽग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय [40]

व्याख्या:

अतिशयेन हन्ता हनीयान् तस्मै । "वृक्षेभ्यः

सु° [पा. 6.3.134] इति तुग्लोपः । प्रलये सर्वहन्ता इत्यर्थः ।

257. शब्दः

"अधि"

मं. अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि । तेषां सहस्रयोजनेऽव धन्वानि तन्मसि [55]

व्याख्या:

अधि उपरि भवन्ति तिष्ठन्ति यत्र तदर्णवम् मेघाधारभूतम् । "अर्णसो लोपश्च" [पा. 5.2.109-2] इति वप्रत्ययोऽन्त्यलोपश्च ।

258. शब्दः

"संरराणाः"

मं॰ अश्मन्नूर्जं पर्वते शिश्रियाणामद्भ्य ओषधीभ्यो वनस्पति-
भ्योऽधि संभृतं पयः । तां न इषमूर्जं धत्त मरुतः
स रराणा अश्मंस्ते क्षुन्मयि त ऊर्ग्यं द्विष्मस्तं ते शुगृच्छतु ।।

व्याख्या:

संरराणाः सम्यक् शान्ति ददति ते संरराणाः सम्यग्दातारः "रा दाने" "बहुलं छन्दसि" (पा. 2.4.76) इति जुहोत्यादिभ्यः द्वित्वं च शानचि परे ।

259. शब्दः

"घृणे"

मं॰ शाखया पविलमन्त्या धूमाक्ता मञ्जुव उषसौ न भानुना ।
तूर्वन्न यामन्नेतशस्य नू रण आ यो घृणे न ततृषाणो
अजरः (10)

261. <u>शब्दः</u>

"पुरस्तारः"

मं. ये देवा देवेष्वधि देवत्वमायन्ये ब्रह्मणः पुरस्तारो अस्य । येभ्यो नर्ते पवते धाम किंचन न ते दिवो न पृथिव्या अधि स्नुषु ॥ 14॥

<u>व्याख्या:</u>

पुरस्तारः पुरोऽग्रे यन्तीति पुरस्तारः "इण् गतौ" इत्यस्मात् "ण्वुल्तृचौ" (पा. 3.1.133) इति तृच्प्रत्ययः । प्रथमा हि प्राणिनां पुरःसराः अथाग्निब्रह्म तस्मै ते पुरस्तारः । इति श्रुतेः (9.2.15)

262. <u>शब्दः</u>

"धाम"

व्याख्या:

स्वकान्यर्थेषु हि अर्थेषु कुरुते यावा कुधियो अध्याहित-वान् । "अधुङ् अध्ययने" धातु. उपसर्ग व्यवधानमार्गेषु "व्यवहिताश्च" [पा. 1.4.82] इति वचनात् ।

264. शब्द:

"विदाथ"

मं. न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति [3]

व्याख्या:

न विदाथ जानीथ । "लेटोऽडाटौ" [पा. 3.4.94]

इत्यादयः ।

व्याख्याः

संसृष्टा "इगुपधज्ञा- (पा. 3.1.133) इति कप्रत्ययः युद्धस्य संसर्गकर्त्री ।

267. शब्दः

"शर्धं उग्रधन्वा"

व्याख्याः

शर्ध इति बलनाम । उग्रधन्वा उग्रमुत्कृष्टं धनुर्यस्य सः । "धनुषश्च (पा. 5.4.133) इत्यनङादेशः ।

268. शब्दः

"अवता हवेषु"

मं. अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता
जयन्तु । अस्माकं वीरा उत्तरे भवन्त्वस्माँ ऽ॥
उ देवा अवता हवेषु [ 43]

व्याख्या:

हे देवाः हवेषु अस्मान् युद्धेषु रक्षत "अन्येषामपि दृश्यते [ पा. 6.3.137] इति दीर्घः अवता इति ।

269. शब्दः

" अप्वा"

मं. अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे
परेहि । अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रा-
स्तमसा सचन्ताम् [ 44]

**व्याख्या:**

अच्छा देवता मा व्याधिर्मा वा यन्नादेवता विद्योऽच्छवायो नमादच्छा । अपपूर्वाज्जातेरन्तर्भावितण्यर्थात् "अन्येष्वपि दृश्यते [पा. 3.2.101] इति ड प्रत्ययः । अपशब्दान्त्यानाकारलोपश्छान्दसः तस्मात् । अच्छा इति ।

270. **शब्द:**

"उरोर्वरीयः"

मं. मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजामृतेनानु वस्ताम्
उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु [47]

**व्याख्या:**

तथा वरुणः ते तव वर्म उरोः पृथोरपि वरीयः

उत्तरं प्रयोगः कृणोतु । अत्यन्तमुरु वरीयः । "ईयसुनि प्रस्थस्फ" [पा. 6.4.157] इत्यादिना उरोर्वरादेशः ।

271. शब्दः

" मामहानः"

मं. तस्मिन्न अग्नावधि मामहान उक्थपत्र ईड्यो गृभीतः ।
तप्तं घर्मं परिगृह्यायजन्तोर्जा यद्यज्ञमयजन्त देवाः ॥55॥

व्याख्या:

मंहयति पूजयति देवानिति मामहानः । मंहते र्विकरण-व्यत्ययेन जुहोत्यादिभ्यः श्लौ " [ पा. 6.1.10 ] इति

निपात्य "तुजादीनां दीर्घोऽभ्यासस्य" (पा. 6.1.7) इत्यभ्यासदीर्घः।

272. <u>शब्दः</u>

"पुरोअग्निर्भवेह"

मं. प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्नि -
र्भवेह । विश्वा आशा दीद्यानो विभाह्यूर्जं नो धेहि
द्विपदे चतुष्पदे (66)

<u>व्याख्या:</u>

हे अग्ने, इहास्मिन्प्रदेशे अग्नेः इष्टकानिचयादिकस्य चितिरूपस्याग्नेः पुरोऽग्निर्भव पुरः अग्रे अङ्गति गच्छतीति पुरोऽग्निः पुरोगन्ता मुख्यो भव "प्रकृत्यान्तः पादमव्यपरे" (पा.6.1.115) इति सन्ध्यभावः ।

273. <u>शब्दः</u>

"दीदिहि"

मं. प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ ।
त्वां शश्वन्त उपयन्ति वाजाः [76]

<u>व्याख्याः</u>

हे अग्ने त्वं अस्माकं पुरोऽग्रे दीदिहि दीप्यस्व । दीप्यतेर्विकरणव्यत्ययेन जुहोत्यादित्वाच्छपः श्लौ सिद्धम् । 'तुजादीनाम्' [पा. 6.1.7] इति पूर्वदीर्घः ।

274. <u>शब्दः</u>

"वीतिहोत्राः"

मं. चित्तिं जुहोमि मनसा घृतेन यथा देवा इहागमन्वीति-
होत्रा ऋतावृधः पत्ये विश्वस्य भूमनो जुहोमि विश्वकर्मणे
विश्वाहादाभ्यं हविः । [78]

व्याख्या:

वीतिहोत्रा होत्रा इति यावत् । वीतिरग्निर्यातो होत्रा येषां ते वीतिहोत्राः कवितव्याः ।

275. शब्दः

"अश्वः"

मं. सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः

घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः

पिन्वमानः ॥ 95॥

व्याख्या:

अश्वः "रुष क्रोधे" रोषति कुप्यतीति रुषः "अरुषः"

(पा. 3.1.135) इति क प्रत्ययः । न क्षयः अरोगिणः आरयादिभि-रुत्कृष्ट इत्यर्थः ।

276. <u>शब्दः</u>

"वसीयः"

मं. शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भगश्च मे द्रविणं च मे भद्रं च मे श्रेयश्च मे वसीयश्च मे यशश्च मे यज्ञेन कल्पन्ताम् (8)

<u>व्याख्या:</u>

वसतीति वसु अतिशयेन वसु वसीयः "तुरिष्ठेमेयस्सु" (पा. 6.4.154) इति तुरो लोपः। निवास योग्यो बहुमान् गुणादिः ।

यक्षे स्वाहा मुग्धाय वैनंशिनाय स्वाहा विनंशिन आन्त्यायनाय
स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा
प्रजापतये स्वाहा इयं ते राण्मित्राय यन्तासि यमन ऊर्जे त्वा वृष्ट्यै
त्वा प्रजानां त्वाधिपत्याय ॥ 28॥

व्याख्या:

वैनंशिनाय विनश्यतीति विनंशी 'मस्जिनशोर्झलि'
(पा. 7.1.60) इति बाहुलकादझल्यपि नशेर्नुमागमः ।

279. शब्दः

"पिपर्तु"

मं. इष्टो अग्निराहुतः पिपर्तु न इष्टं हविः ।
स्वगेदं देवेभ्यो नमः ॥ 57॥

<u>व्याख्या:</u>

अग्निर्नोऽस्माकमभिलषितं पिपर्तु पूरयतु ।
[illegible] अत्यर्थं । नौजस्वान् पालयतीति वा । "पॄ पालनपूरणयोः"
लोट् जुहोत्यादित्वाच्छ्लुः । "अर्तिपिपर्त्योश्च" (पा. 7.4.77)
अभ्यासस्येत्वम् ।

280. <u>शब्दः</u>

"तिग्मं"

मं. मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था
परस्याः । सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून्
ताढि वि मृधो नुदस्व ( 71)

<u>व्याख्या:</u>

तिग्ममुत्साहवन्तम् "तिग्मं तेजतेरुत्साहकर्मणः (नि. 10.6)
इति यास्कः ।

281. <u>शब्दः</u>

"हरिमा"

मं. अयं ते अ॰ हरिमा हि काममुत्तानहस्ता नमसोपसद्य
यजिष्ठेन मनसा यक्षि देवानस्रेधता मन्मना विप्रो अग्ने ॥7॥

<u>व्याख्या:</u>

कामयत इच्छत इति कामं हर्य्यः हरिम । "हर्य कान्तौ" लिट्
"अन्येषामपि दृश्यते" (पा. 6.3.137) इति हरिमेत्यस्य संहितायां
दीर्घः ।

282. <u>शब्दः</u>

"विषूचिका"

मं. या स्वाह्नं विषूचिकेमौ वृक्कं च रक्षति । श्येनं पतत्रिण
सिं ह सैमं पात्वं हसः ॥10॥

भूतान्यर्को वृक्षो भवति संवृतः कटुकिम्न (नि. 5.4) इति यास्कः ।

२८५. <u>सधमादः</u>

"मदन्तः सधमादेषु"

मं. वैश्वदेवीं पुनतीं देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः । तया मदन्तः सधमादेषु वयं स्याम पतयो रयीणाम् (५५)

<u>व्याख्या:</u>

सधमादेषु यज्ञस्थानेषु मदन्तो मोदमानाः सन्तो वयं धनानां पतयः भवेम । सह माद्यन्ति देवा येषु ते सधमादाः "सध मादस्थयोश्छन्दसि" (पा. 6.3.96) इति सहस्य सधादेशः ।

285. शब्दः

"मामकाः"

मं. ये समानाः समनसो जीवा जीवेषु मामकाः ।

तेषां श्रीर्मयि कल्पतामस्मिंल्लोके शतं समाः ॥ 46 ॥

व्याख्या:

मामका मदीया जीवाः प्राणिनः । तद्धिताः ये मे ते मामकाः "तवकममकावेकवचने" ॥ पा. 4.3.3 ॥ इति अस्मदो ममकादेशः ।

286. शब्दः

"दधातन"

मं. अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः ।

अत्ता हवींषि प्रयतानि बर्हिष्यथा रयिं सर्ववीरं दधातन

॥ 59 ॥

व्याख्या:

286. त्र

त्रातेन स्थापयतु सर्वे वीराः धा यत तत् । "निपातस्य च" [पा. 6.3.136] इति दीर्घोऽन्त्यादस्य "तप्तनप्" [पा. 7.1.45] इति तप्तनबादेशः ।

287. शब्दः

देवत्रा पनया"

मं. यमग्ने कव्यवाहन त्वं चिन्मन्यसे रयिम् । तं नो गीर्भिः
श्रवाय्यं देवत्रा पनया युजम् [64]

व्याख्या:

"देवत्रा पनय" देवेषु पनय देहि । पनतिर्दानकर्मा । "देवमनुष्यपुरुष" [पा. 5.4.56] इत्यादिना सप्तम्यर्थे देवात् त्रा प्रत्ययः ।

२८८. <u>शब्दः</u>

"सुराधसः"

मं. त्रया देवा एकादश त्रयस्त्रिंशाः सुराधसः । बृहस्पतिपुरोहिता देवस्य सवितुः सवे । देवा देवैरवन्तु मा (11)

<u>व्याख्या:</u>

सुराधसः शोभनं राधो येषामिति । राध इति धननाम । "राध्नुवन्त्यनेन (नि. ४.४) इति यास्कोक्तेः ।

२८९. <u>शब्दः</u>

"यदर्ये"

मं. यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये । यच्छूद्रे यदर्ये यदेनश्चकृमा वयं यदेकस्याधि धर्मणि तस्यावयजनमसि (17)

291. <u>शब्दः</u>

" य ईशे महतो"

सं. यो भूतानामधिपतिर्यस्मिँल्लोका अधिश्रिताः ।
य ईशे महतो महांस्तेन गृह्णामि त्वामहं मयि गृह्णामि
त्वामसौ ( 32 )

<u>व्याख्या:</u>

महान् सर्वोत्कृष्टो यः महतः महत्तत्त्वप्रमुखस्य तत्त्वगणस्य ईशे ईष्टे नियन्ता वर्तते " लोपस्त आत्मनेपदेषु" ( पा. 7.1.41 ) इति त लोपे सति लडि. प्रथमैकवचने ईशे इति रूपम् "अधीगर्थदयेशाम् ( पा. 2.3.52 ) इति कर्मणि षष्ठी ।

292. __शब्दः__

"नराशंसः"

मं. नराशंसः प्रति शूरो मिमानस्तनूनपात्प्रति

यज्ञस्य धाम । गोभिर्वपावान्मधुना समञ्जन्हिरण्यैश्चन्द्री

यजति प्रचेताः [37]

__व्याख्याः__

नराशंसः नरैर्ऋत्विग्भिरा समन्तात् शस्यते शस्त्रैः स्तूयते सः नराशंसः । यद्वा "नरा अस्मिन्नासीनाः शंसन्ति [निरु. 8.6] इति यास्कोक्तेर्नराशंसो यज्ञः तद्रूपस्तदात्मा ।

293. __शब्दः__

"सुदुघे"

मं. उषासानक्ता बृहती बृहन्तं पयस्वती सुदुघे शूरमिन्द्रम् ।

तन्तुं ततं पेशसा संवयन्ती देवानां देवं यजतः सुरुक्मे ॥41॥

व्याख्या:

सुदुघे शोभनं दुग्धः ते "दुहः कब्घश्च" [पा. 3.2.70]
इति कप् घादेशश्च ।

294. शब्दः

"तविषी"

मं. आयात्विन्द्रोऽवस उप न इह स्तुतः सधमादस्तु शूरः ।
वावृधानस्तविषीर्यस्य पूर्वीर्द्यौर्न क्षत्रमभिभूति पुष्यात् ॥47॥

व्याख्या:

"तविषीः" स्तवनीं यथा स्तुयते तथा परमेन्द्रस्य बलानि

स्तुवन्ति । तदिंधो इतिअन्नाम "तद्योर्द्धदिवर्मणः {नि. 9.25}

इति यास्कः ।

295. <u>शब्दः</u>

"सुत्रामन्"

ऋ. इन्द्रः सुत्रामा स्ववाँ अवोभिः सुमृडीको भवतु विश्ववेदाः । बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम ॥ {६.५१}

<u>व्याख्या:</u>

सुत्रामा सुष्ठु त्रायते रक्षति सुत्रामा "आतो मनिन्" {पा. 3.2.74} इति मनिन् ।

296. <u>शब्दः</u>

"दुहे"

मं. समिद्धो अग्निरश्विना तप्तो घर्मो विराट् सुतः ।

दुहे धेनुः सरस्वती सोमं शुक्रमिहेन्द्रियम् ॥55॥

<u>व्याख्या:</u>

प्राणयित्री सरस्वती इह यज्ञे सोमं दुग्धे "दुह प्रपूरणे"

लटि तङि. प्रथमैकवचने छेदसि "लोपस्त आत्मनेपदेषु" [पा. 7.1.41]

इति त लोपे दुहे इति ।

297. <u>शब्दः</u>

"दाशुषे"

मं. सविता वरुणो दधद्यजमानाय दाशुषे । आदत्त नमुचेर्वसु

सुत्रामा बलमिन्द्रियम् ॥71॥

व्याख्या:

दाशुषे दाशति ददातीति दाश्वान् तस्मै हवींषि ददते " दाश्वान्साह्वान्" – ( पा. 6.1.92 ) इत्यादिना क्वसन्तो निपातः ।

298. शब्दः

" त्वायवः "

मं. इन्द्रायाहि चित्रभानो सुता इमे त्वायवः ।
अण्वीभिस्तना पूतासः ( 87)

व्याख्या:

त्वां कामयन्ते त्वायवः "सुपः आत्मनः क्यच्" (पा. 3.1.8 ) "क्याच्छन्दसि" ( पा. 3.2.170) इत्युप्रत्ययः ।

२९९. <u>शब्दः</u>

"सोम्यं मधु"

मं. अश्विना पिबतां मधु सरस्वत्या सजोषसा ।

इन्द्रः सुत्रामा वृत्रहा जुषन्तां सोम्यं मधु (१०)

<u>व्याख्या:</u>

सरस्वती च मधु मधुरं सोम्यं सोममयं हविर्जुषन्तां सेवन्ताम् । "मये च" (पा. ४.४.१३८) इति सोमशब्दात्मयडर्थे य प्रत्ययः । सोममयं सोम्यम् ।

३००. <u>शब्दः</u>

"यजिष्ठः"

मं. त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवया सिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् (३)

301. <u>शब्दः</u>

"नेदिष्ठः"

मं. स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या
उषसो व्युष्टौ । अवयक्ष्व नो वरुणं रराणो वीहि
मृळीकं सुहवो न एधि ॥ 5 ॥

<u>व्याख्या:</u>

अत्यन्तमन्तिको नेदिष्ठः "अन्तिकबाढयोर्नेदसाधौ"
(पा. 5.3.63.) इति इष्ठे परे नेदादेशः ।

302. <u>शब्दः</u>

"सुप्रणीतिम्"

मं. महीमूषु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम ।
तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीतिम् ॥ 5 ॥

व्याख्या:

सुप्रणीतिं शोभना प्रणीतिः प्रणयनं भवनं यस्यास्ताम् । "अदितिरदीना देवमाता" (नि. ४.२२.) इति ।

303. शब्दः

"शमिता"

मं. शमिता नो वनस्पतिः सविता प्रसुवन्भगम् ।
ककुप्छन्द इहेन्द्रियं वशा वेहद्वयो दधुः ॥21॥

व्याख्या:

नोऽस्माकं शमिता शमयति सुखयति शमिता । "शमिता यज्ञे (पा. 6.4.54) इति छान्दसो णिचो लोपः ।

304. शब्दः

"मदा मासरेण"

मं. होता यक्षदश्विनौ सरस्वतीमिन्द्रं सुत्रामाणमिमे सोमाः सुरामाणश्छागैर्न मेषैरृषभैः सुताः शष्पैर्न तोक्मभिर्लाजैर्महस्वन्तो मदा मासरेण परिष्कृताः शुक्राः पयस्वन्तोऽमृताः प्रस्थिता वो मधुश्चुतस्तानश्विना सरस्वतीन्द्रः सुत्रामा वृत्रहा जुषन्ता सोम्यं मधु पिबन्तु मदन्तु व्यन्तु होतर्यज (42)

व्याख्या:

मदाः मदयन्ति तर्पयन्तीति मदाः । मासरेण पूर्वोक्तेन परिष्कृता अलंकृताः "संपर्युपेभ्यः-" (पा. 6.1.137) इति सुट्.

305. शब्दः

"रश्मिभ्या"

मं. होता यक्षद् वनस्पतिमभि हि पिष्टतमया रभिष्ठया रशनयाधित । यत्राश्विनोश्छागस्य हविषः प्रिया धामानि यत्र सरस्वत्या मेषस्य हविषः प्रिया धामानि यत्रेन्द्रस्य ऋषभस्य हविषः प्रिया धामानि यत्राग्नेः प्रिया धामानि यत्र सोमस्य प्रिया धामानि यत्रेन्द्रस्य सुत्राम्णः प्रिया धामानि यत्र सवितुः प्रिया धामानि यत्र वरुणस्य प्रिया धामानि यत्र वनस्पतेः प्रिया पाथा सि यत्र देवानामाज्यपानां प्रिया धामानि यत्राग्नेर्होतुः प्रिया धामानि तत्रैतान्प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभीयस इव कृत्वी करदेवं देवो वनस्पतिर्जुषतां हविर्होतर्यज ॥ ४६॥

<u>व्याख्या:</u>

रभिष्ठया रभते पशून्नियच्छतीति रब्ध्री तृच् ङीप् । अत्यन्तं रब्ध्री रभिष्ठा तया । तुश्छन्दसि" (पा. ५.३.५९) इष्ठनि तृचो लोपः । समर्थयेत्यर्थः ।

306. शब्दः

"उपावृहतु"

मं.
व्याख्या:

उपावृहतु उपावृहतु स्थापयतु । लुङर्थे लिङ्. रूपम् । लेटि वा " सिब्बहुलं लेटि" (पा. ३.१.३४) इति सिप्प्रत्ययेऽडागमे च रूपम् ।

307. "ईशायै"

मं. देवं बर्हिर्वारितीनामध्वरे स्तीर्णमश्विभ्यामूर्ण-
म्रदाः सरस्वत्या स्योनमिन्द्र ते सदः । ईशायै
मन्यु राजानं बर्हिषा दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु
यज (57)

<u>व्याख्या:</u>

ईशाये वेश्वयपि ईडभावोशा तस्यै " गुरोश्च हलः"
( पा. ३.३.१०३) इति अधिकारे ईप्रत्ययः तोत्वागाद् ।

३०८. <u>शब्द:</u>

"भन्त्स्यामि"

मं. स्वाहा त्वा देवेभ्यः प्रजापतये ब्रह्मन्नश्वं भन्त्स्यामि ह/
देवेभ्यः प्रजापतये तेन राध्यासम् । तं बधान देवेभ्यः प्रजा-
पतये तेन राध्नुहि ( ५)

<u>व्याख्या:</u>

हे ब्रह्मन् अश्वं भन्त्स्यामि बन्धनं करिष्यामि ।

दधातेर्लुङि रूपे "एकाचो बशः" [पा. 8.2.37] इति भष्भावः ।

309. शब्दः

"यो अर्वन्तं जिघांसति"

मं. प्रजापतये त्वा जुष्टं प्रोक्षामीन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामि वायवे त्वा जुष्टं प्रोक्षामि विश्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि सर्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि । यो अर्वन्तं जिघांसति तमभ्यमीति वरुणः परो मर्तः श्वा [5]

व्याख्या:

यः अर्वन्तमश्वं जिघांसति हन्तुमिच्छति अर्वणस्त्रसावनञः [पा. 6.4.127] इति तृन्तादेशः । हन्तेः हिनस्ति "सन्"

डिमायात् " एतस्य लटि "तुरुस्तुशम्यमः" [पा. 7.3.95] इति ईट्प्रत्ययः । अदादिगण पठितः ।

310. <u>शब्दः</u>

"राति"

मं. राति सत्यतिं महे सवितारमुपह्वये । आसवं देववीतये [13]

<u>व्याख्या:</u>

रातिं राति ददातीति रातिः तत्र "ऊतियूति"- [पा. 3.3.97] इत्यादिना कर्तरि क्तिन्प्रत्ययान्तो निपातः ।

311. <u>शब्दः</u>

"नरम्धिषाय"

मं. काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहा स्वाहाधिमाधीताय स्वाहा स्वाहा मनः प्रजापतये स्वाहा चित्तं विज्ञातायादित्यै स्वाहादित्यै मह्यै स्वाहादित्यै सुमृडीकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहा पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णे नर धिषाय स्वाहा त्वष्टे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहा विष्णवे स्वाहा विष्णवे निभूयपाय स्वाहा विष्णवे शिपिविष्टाय स्वाहा ॥20॥

**व्याख्या:**

"नरन्धिषाय" "धिष शब्दे" इत्यादिर्वैदिकः । नरं धिषेष्टि शब्दयति उपदेशं स नरन्धिषः ।

312. **शब्दः**

" तस्यौ पुरास्ययजमानस्य"

मं. आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे
राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां
दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा
जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो
जायतां निकामे निकामे नः पर्जन्यो वर्षतु फल-
वत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥22॥

**व्याख्या:**

अस्य यजमानस्य युवा समर्थः सभेयः सभायां योग्यो वीरः पुत्रो जायताम् । सभायां साधुः सभेयः "ढश्छन्दसि"– [पा. ४.४. 106] इति सभाशब्दात् तत्र साधु इत्यर्थे ढप्रत्ययः । तस्य एयादेशः ।

513. **शब्दः**

"पक्षी अत्र द्विपदश्चतुष्पदः"

मं. यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो
बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा
विधेम ॥3॥

व्याख्या:

द्विपादस्य मनुष्यपक्ष्यादेः चतुष्पदः हस्तिगवादेः प्राणिजातस्य ईशे ईष्टे ऐश्वर्यं करोति "लोपस्त आत्मनेपदेषु (पा. 7.1.41) इति तकारलोपे ईशे रूपम् । "अधीगर्थदयेशां कर्मणि (पा. 2.3.52) इति कर्मणि षष्ठी ।

315. अरुषः

" अरुषं परिचरन्तम्"

मं. युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः । रोचन्ते
रोचना दिवि ॥1॥

विपक्षौ । यद्वा तित्तिरि शकुनि नाम "वैतत्तिकर्मणः" (नि. 2.6) इति यास्कः । वेः पक्षिणा इव पक्षौ यथोक्तौ ।

316. शब्दः

"शूद्रा यदर्यजारा"

मं. यद्धरिणो यवमत्ति न पुष्टं पशु मन्यते । शूद्रा यदर्यजारा न पोषाय धनायति (30)

व्याख्या:

एवं शूद्रा शूद्रजातिः स्त्री यदा अर्यजारा भवति "अर्यः स्वामिवैश्ययोः (पा. 3.1.103) इति निपातनादर्यो वैश्यो जार उपपतिर्यस्याः सा अर्यजारा । "शूद्रा चामहत्पूर्वा जातिः

[पा. 4.1.4] इति स्त्रीत्वार्थे टाप् ।

317. शब्दः

"दधिक्राव्णः"

मं. दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।

सुरभि नो मुखा करत्प्रण आयूं षि तारिषत् ॥32॥

व्याख्या:

दधिक्राव्णः दधाति धारयति नरमिति दधिः "आदृगमहन- [पा. 3.2.171] इति किप्रत्ययः । दधिः सन् क्रामतीति दधिक्रावा । तस्य "अन्येभ्योऽपि दृश्यते " [पा. 3.2.75] इति वनिप्प्रत्ययः "विड्वनोरनुनासिकस्यात्" [पा. 6.4.41] इति धातोराकारः ।

318. <u>शब्दः</u>

"प्रभूवरीः"

मं. महानाम्न्यो रेवत्यो विश्वा आशाः प्रभूवरीः ।

मैघीर्विद्युतो वाचः सूवीभिः शम्यन्तु त्वा [35]

<u>व्याख्या:</u>

प्रभवन्ति सर्वभूतानि धारयितुं समर्था भवन्ति प्रभूवर्यः "अन्येभ्योऽपि दृश्यन्ते" [पा. 3.2.75] इति वनिप् [ऋन्नेभ्यः- [पा. 4.1.5] इति ङीप् "वनो र च" [पा. 4.1.7] इति तस्य रेफः पूर्वस्य वर्णदीर्घत्वम् ।

319. <u>शब्दः</u>

"नार्यः"

मं. नार्यस्ते पत्न्यो लोम विचिन्वन्तु मनीषया । देवानां पत्न्यो दिशः सुवीभिः शम्यन्तु त्वा [36]

व्याख्या:

एतद् त्वां वदुपवदन्तमपि अपवन्ताम: त्वर्धात पृच्छाम:

"यच्च प्राधान्यपरिभाषणहिंसादानेषु वद् 'वदन्तो मति' अत्र प्रश्ने किं चिद् त्वं प्रतिबोधासि प्रतिवदसि । "वचउम" [पा. 7.4.20] इतिलेटि छान्दस उम् । "लेटोऽडाटौ" [पा. 3.4.94] इत्याडागम: ।

320. शब्द:

"आच्छयति"

मं. कस्त्वाऽऽच्छ्यति कस्त्वा विशास्ति कस्ते गात्राणि शम्यति । क उ ते शमिता कविः [39]

व्याख्या:

हे अश्वमेध यागीऽयं प्रकरण: । हे अश्व:, क: प्रजापति:

[illegible] "अन्येषामपि दृश्यते" [पा. 6.3.137] इति संहितायां दीर्घः ।

325. [illegible]

" पक्षतिः "

मं. अग्नेः पक्षतिर्वायोर्निपक्षतिरिन्द्रस्य तृतीया सोमस्य चतुर्थ्यदित्यै पञ्चमीन्द्राण्यै षष्ठी मरुतां सप्तमी बृहस्पतेरष्टम्यर्यम्णो नवमी धातुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यमस्य त्रयोदशी [५]

व्याख्या:

पक्षः साध्यविरोधयोः बले काले पतत्रे च रूपे पार्श्वे [illegible] इत्यभिधानोक्तेरत्र पक्षः पार्श्ववाची । पक्षस्य मूलं

पक्षतिः "पक्षात्तिः (पा. 5.2.25) इतिसूत्रार्थे तिप्रत्ययः । ततः पक्षस्य पार्श्वस्य मूलभूतान्यस्थीनि यानि शब्दवाच्यानि पक्षति शब्देनोच्यन्ते ।

326. <u>शुभंयाः</u>

"शुभं यावानो विदथेषु जग्मयः"

मं. पृषदश्वा मरुतः पृश्निमातरः, शुभंयावानो विदथेषु जग्मयः । अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसा गमन्निह (20)

<u>व्याख्या:</u>

शुभं कल्याणं यान्ति प्राप्नुवन्ति प्रापयन्ति वा शुभंयावानः "आतो मनिन् (पा. 3.2.74) इति वनिप्

प्रत्ययः । विदथेषु यज्ञगृहेषु जग्मयः गमनशीलाः "आदृगमहन" (पा. 3.2.171) इति किः ।

327. चक्र:

"यत्रा नश्चक्रा जरसं तनूनाम् (

मं. शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः (22)

व्याख्या:

यत्र शरत्काले नोऽस्माकं तनूनां शरीराणां यूयं जरसं जरां चक्र कुरुथ । करोतेर्लिटि मध्यमबहुवचनम् । "द्व्यचोऽतस्तिङः

(पा. 6.3.135) इति चक्रेत्यत्र संहितायां दीर्घः "निपातस्य च" (पा. 6.3.136) इति चक्रेत्यत्र दीर्घः ।

328. शब्दः

"परिख्यन्"

मं. मा नो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुतः परिख्यन् । यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि (24)

व्याख्या:

यद् वयं प्रवक्ष्यामः तत् मित्रादयोऽपि देवाऽप्यान्या परिख्यन् मा निन्दन्तु । परिख्यानं निन्दा अर्थे । "अस्यतिवक्तिख्यातिभ्योऽङ्" (पा. 3.1.52) इति च्लेरङ् । "न माङ्योगे" (पा. 6.4.75) इत्यडभावः ।

३२९. शब्दः

"शीर्षण्या"

सं. यदाजिनो दाम संदानमर्वतो या शीर्षण्या रशना रज्जुरस्य । यद्वा घास्य प्रभृतमास्ये तृणं सर्वा ता ते अपि देवेष्वस्तु (८)

**व्याख्या:**

या च शीर्षण्या शीर्षे भवा शीर्षण्या शिरोबन्धनार्था अस्य रज्जुः । शिरः शब्दात् " भवे छन्दसि " (पा. 4.4.110) इति यत् । "ये च तद्धिते " (पा. 6.1.61) इति शीर्षन्नादेशः ।

३३०. शब्दः

"अश्विपबन्ध्याः"

3. यन्नीक्षणं मांस्पचन्या उखाया या पात्राणि यूष्ण आसे -
चनानि । ऊष्मण्यापिधाना चरूणामङ्काः सूनाः
परिभूषन्त्यश्वम् (36)

व्याख्या:

मांस्पचन्याः मांसं पच्यते यस्यां सा मांस्पचनी तस्याः मांसपाकाधिकरणभूतायाः । "करणाधिकरणयोश्च (पा. 3.3.117) ल्युट् । "मांसस्य पचि युड्घञोः" इति मांसस्याकार लोपः टिड्ढाणञ्- (पा. 4.1.15) इति ङीप् मांस्पचनी तस्याः मांस्पचन्याः षष्ठ्येक वचने ।

932. शब्दः

" भ्राजन्त्यभिविक्त"

व्याख्या:

भ्राजन्ती अतिशयेन दीप्यमाना उखा स्थाली सा

अभिविक्त मा चलतु " ओविजी भयचलनयोः तुदि. उदि."
झलो झलि ( पा. 8.2.26) इति सिलोपे रूपम् ।

333. <u>शब्दः</u>

" कृणोत"

मं. चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः
समेति । अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या
विशस्त ( 41)

<u>व्याख्या:</u>

कृणोत " कृ करणे स्वादिः " तप्तनप्" ( पा. 7.1.45)
इति मध्यमबहुवचनस्य तबादेशः ततो गुणः ।

334. <u>शब्दः</u>

"सुगव्यम्"

मं. सुगव्यं नो वाजी स्वश्व्यं पुंसः पुत्राँ उत विश्वा-पुषं रयिम् । अनागास्त्वं नो अदितिः कृणोतु क्षत्रं नो अश्वो वनतां हविष्मान् ॥ 45॥

<u>व्याख्या:</u>

गवां समूहो गव्यम् । "खलगोरथात्" (पा. 4.2.20) इति यत् प्रत्ययः । शोभनं गव्यम् सुगव्यम् ।

335. <u>शब्दः</u>

"स्वश्व्यम्"

व्याख्या:

स्वश्वीयम् कुमोंतु अश्वानां समूहः अश्वीयम् " केशाश्व" - (पा. 4.2.48) इति विकल्पात् पक्षे छः । शोभनम् अश्वीयं स्वश्वीयम् ।

336. शब्दः

" हविष्मान्"

व्याख्या:

हविष्मान् हविरस्यास्तीति हविष्मान्" तदस्यास्ति"- (पा. 5.2.94) इति मतुप् पकारउकारयोरित् संज्ञायाम् लोपश्च हविष्मत् इति हविर्भूतावयवः । यद्वा देवत्वाप्त्या हविष्मान् ।

337. <u>शब्दः</u>

" संनमतामदः "

मं. अग्निश्च पृथिवी च संनते ते मे संनमतामदो वायुश्चान्तरिक्षं च संनते ते मे संनमतामद आदित्यश्च द्यौश्च संनते ते मे संनमतामद आपश्च वरुणश्च संनते ते मे संनमतामदः । सप्त स सदो अष्टमी भूतसाधनी सकामाँ2।। अध्वनस्कुरु संज्ञा मनस्तु मेऽमुना ॥।॥

<u>व्याख्या:</u>

संनमताम् संनमयताम् वंश वर्तिनम् कुरुतामित्यर्थः ।

अह इति पूजायादर्हाम द्वितीयान्तम् प्रयोज्यम् । "छन्दस्युभयथा" [पा. 3.4.117] इति शपोऽप्यार्धधातुकत्वात् "णेरनिटि" [पा. 6.4.21] इति णिलोपः ।

338. <u>अर्यः</u>

"अर्यः"

मं. बृहस्पते अति यदर्यो अर्हाद् द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ।
उपयामगृहीतोऽसि बृहस्पतये त्वैष ते योनिर्बृहस्पतये त्वा ॥3॥

<u>व्याख्या:</u>

अर्यः स्वामी अर्हणमर्हति पूजयति । "लेटोऽडाटौ" [पा. 3.4.94] इत्याडागमः । "अर्यः स्वामिवैश्ययोः [पा. 3.1.103]

अर्य शब्दः स्वामिन्यन्तोदात्तः वैश्येऽनुदात्तः । ईश्वरयोग्यं धनं देहीत्यर्थः ।

339. <u>शब्दः</u>

" द्युमत्"

टि.
<u>व्याख्या:</u>

द्युमत् द्यौः कान्तिरस्यास्तीति द्युमत् " दिव उत्" [ पा. 6.1.131 ] उकारः ।

340. <u>शब्दः</u>

" ऋतावानं"

मं. ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् ।
अजस्रं घर्ममीमहे । उपयामगृहीतोऽसि वैश्वानराय
त्वैष ते योनिर्वैश्वानराय त्वा ॥ 6॥

व्याख्या:

ऋतवानम् ऋतं सत्यं यज्ञो जलं वाऽस्यास्तीति ऋतवा तम् " छन्दसी वनिपौ वाच्यौ" (पा. 5.2.109 वा 2) इत्यनेन वनिप्रत्ययः संहितायामुत्तरपदादीर्घः ।

341. शब्दः

"अजस्रं घर्ममीमहे"

व्याख्या:

न जस्यति नश्यतीति अजस्रस्तमनुपक्षीणम् " जसु

छिदायाम् "नमिकम्पि"- [ पा. 3.2.167] इति र प्रत्ययः ।
घर्मं घृ क्षरणदीप्त्योः दीप्त्योः" जिघर्ति क्षरति जलं घर्मस्तद् दीप्तो
वा ।

542. शुक्रः

" वाजिष्ठम्"

मं. द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत । नेष्ट्रादृ-
तुभिरिष्यत [ 22]

व्याख्या:

वाजयति प्रापयति हविरिति वाजयितृ । वजेर्ण्यन्तात्
तृच् । अत्यन्तं वाजयितृ वाजिष्ठम् " अतिशायने तमबिष्ठनौ"

मं.  अनु वीरैरनु पुष्यास्म गोभिरन्वश्वैरनु सर्वेण पुष्टैः ।

अनु द्विपदानु चतुष्पदा वयं देवा नो यज्ञमृतुथा नयन्तु ॥७॥

व्याख्या:

सर्वेणान्येनापि धनेन पुष्यास्म । पुष्टैः सर्वपदार्थै-र्पुष्टाभिभिः पुष्यास्म । द्वौ पादौ यस्येति द्विपात् तेन द्विपदा मनुष्येण [illegible] दासादिना चतुष्पदा गवादिना च पुष्यास्म पादोऽन्यतरस्याम् " (पा. ४.१.८) इत्यन्तलोपः "पादः पत् (पा. ६.४.१३०) इति पदादेशः ।

345.  शब्दः

"अशातो}

मं. अग्ने पत्नीरिहावह देवानामुशतीरुप । त्वष्टारं सोमपीतये ॥20॥

व्याख्या:

उशती: हवि: कामयमाना: । वशे: शत्रन्तात् " उगित: [पा. 4.1.6] इति ङीप्

246. शब्द:

"जुहोत"

मं. द्रविणोदा: पिपीषति जुहोत प्र च तिष्ठत । नेष्ट्रादृतुभिरिष्यत ॥22॥

व्याख्या:

जुहोत जुहुत प्रतिष्ठत च । " तप्तनप्"- [पा. 7.1.45]

इति तकारादेशः । कर्मगुह्मा भवेदर्थः ।

247. <u>शब्दः</u>

"स्वादिष्ठया"

मं स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।
इन्द्राय पातवे सुतः {25}

<u>व्याख्या:</u>

स्वादिष्ठया स्वादोर्विद्यते यस्यां सा स्वादवती अत्यन्तं स्वादवती स्वादिष्ठा तया । "विन्मतोर्लुक्" {पा. 5.3.65} इति इष्ठनि मतुपो लुक् । स्वादुतमया ।

248. <u>शब्दः</u>

" मदिष्ठया"

**व्याख्या:**

मदिष्ठया मद्यतीति मदयित्री अत्यन्तं मदयित्री मदिष्ठा तया । इष्ठनि " तुरिष्ठेमेयः सु" ( पा. 6.4.155) इति तृचो लोपः ।

549. **सधस्थः**

"सधस्थम्"

मं. रक्षोहा विश्वचर्षणिरभि योनिमयोहते । द्रोणे सधस्थमासदत् ॥ 26 ॥

**व्याख्या:**

सधस्थम् सह सार्द्धं तिष्ठन्ति लोका यत्र सः सधस्थः

"सुपि स्थः" [पा. 3.2.4] इति क प्रत्ययः। आतो लोपः"
[पा. 6.4.64] इति आ लोपः "सधमादस्थयोश्छन्दसि
[पा. 6.3.96] इति सहस्य सधादेशः।

350. शब्दः

"अमुत्रभूयादध"

मं. अमुत्रभूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुंचः। प्रत्यौहता-
मश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः [9]

व्याख्या:

हे बृहस्पते, त्वममुत्रभूयादध अमुत्र परलोके भवनममुत्र
भूयम्। "भुवो भावे" [पा. 3.1.107] इति क्यप्। परलोक

गमनान्मरणान्मुंच । मरणाद्रक्षेत्यर्थः ।

351. <u>यक्षद्:</u>

"स यक्षदस्य महिमानमग्नेः"

मं. सोऽध्वर्युरस्याग्नेः महिमानं यक्षत् यजतु सिब्बहुलं लेटि"

स यक्षदस्य महिमानमग्नेः स ईं मन्द्रा सुप्रयसः ।

वसुश्चेतिष्ठो वसुधातमश्च ।[15]

<u>व्याख्या:</u>

सोऽध्वर्युरस्याग्नेः महिमानं यक्षत् यजतु "सिब्बहुलं लेटि" [पा. 3.1.34] लेटोऽडाटौ " इतश्च लोपः परस्मैपदेषु [पा. 3.94-97] इति सूत्रैर्यक्षदिति रूपम् ।

552. <u>शब्दः</u>

"पुरुक्षु"

मं. तन्नस्तुरीपमद्भुतं पुरु क्षु त्वष्टा सुवीर्यम् । रायस्पोषं विष्यतु नाभिमस्मे (20)

<u>व्याख्या:</u>

पुरुक्षु बहुक्षु क्षियति निवसति पुरुक्षु " सुपांसुलुक (पा. 7.1.39) इत्यमोलुक् । क्षियतेरौणादिको डु प्रत्ययः ।

553. <u>शब्दः</u>

" रराणस्त्मना देवेषु"

मं. वनस्पतेऽवसृजा रराणस्त्मना देवेषु । अग्निर्हव्यं शमिता सूदयाति (21)

<u>व्याख्या:</u>

"रराणस्त्मना देवेषु" त्मना आत्मना देवेषु रराणः हविर्दानः "रा दाने" कानच् । "मन्त्रेष्वाङ्यादेरात्मनः" [पा. 6.4.141] इत्यालोपः ।

३२५. <u>शब्दः</u>

"अश्वायन्तः"

मं. न त्वावाँ२। अन्यो दिव्यो न न पार्थिवो न जातो

न जनिष्यते । अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्त-

स्त्वा हवामहे ।

<u>व्याख्या:</u>

अश्वायन्तः अश्वान् कामयमानाः "अश्वाघस्यात्"

(पा. 7.4.37) इति क्यचि आत्वम् । ततः शतृप्रत्ययः ।

355. शब्दः

"सदावृधः"

मं. कया नश्चित्र आ भुवदूती सदावृधः सखा कया शचिष्ठया वृता (39)

व्याख्या:

सदावर्धत इति सदावृधः "इगुपध" - (पा. 3.1.135) इति क प्रत्ययः । सदा वर्धमानः ।

356. शब्दः

"ओजिष्ठः"

मं. होता यक्षत्समिधेन्द्रमिडस्पदे नाभा पृथिव्या अधि । दिवो वर्ष्मन्त्समिध्यत ओजिष्ठश्चर्षणीसहां वेत्वाज्यस्य होतर्यज (1)

व्याख्या:

ओजस्वितमः अत्यन्तमोजस्वी ओजिष्ठः इष्ठनि परे "विन्मतोर्लुक्" (पा. 5.3.65) इति विनो लुकि टिलोपे ओजिष्ठ इति रूपम् ।

357. शब्दः

"ऊतिभिः "

मं. होता यक्षत्तनूनपातमूतिभिर्जेतारमपराजितम् । इन्द्रं देवं स्वर्विदं पथिभिर्मधुमत्तमैर्नराशं सेन तेजसा वेत्वाज्यस्य होतर्यज (2)

व्याख्या:

ऊतिभिः अवन्ति तर्पयन्ति ते ऊतयस्तेः "ऊतियूति" [पा. 3.3.97] इत्यादिना कर्तरि निपातः ।

358. शब्दः

"अर्वाणम्"

मं. देवीर्द्वार इन्द्रं संघाते वीड्वीर्यामन्नवर्धयन् आ वत्सेन तरुणेन कुमारेण च मीवतामार्वाणं रेणुककाटं नुदन्तां वसुवने वसुधेयस्य व्यन्तु यज ॥ 13 ॥

व्याख्या:

अर्वाणम् अर्यते गम्यते येनेत्यर्वा तम् "ऋ गतौ" इत्यतो "अन्येभ्योऽपि दृश्यन्ते [पा. 3.2.75] इति वनिप्प्रत्ययः ।

मं. देवो देवैर्वनस्पतिर्हिरण्यपर्णो मधुशाखः सुपिप्पलो देवमिन्द्रमवर्धयत् । दिवमग्रेणास्पृक्षदान्तरिक्षं पृथिवीमदृंहीद् वसुवने वसुधेयस्य वेतु यज ॥ 20 ॥

व्याख्या:

यो वनस्पतिरग्रेण दिवं स्वर्गमस्पृक्षत् स्पृशति । स्पृशेर्लुङि "शल इगुपधादनिटः क्सः" (पा. 3.1.45) इति क्स प्रत्ययः । अन्तरिक्षं मध्येनेति शेषः ।

261. शब्दः

" उधातानवता"

मं. देवी उषासानक्ता देवमिन्द्रं वयोधसं देवी देवमवर्धताम्
अनुष्टुभा छन्दसेन्द्रियं बलमिन्द्रे वयो दधद्वसुवने वसुधेयस्य
वीतां यज ॥ 37 ॥

व्याख्या:

उषाश्च नक्तं च उषासानक्ता " उषासोषसः ॥ पा. 6.3.31॥ इत्युषः शब्दस्य देवताद्वन्द्वे उषासाआदेशः विभक्तेराकारश्च ।

262. शब्दः

"अर्वा"

मं. त्वष्टा वीरं देवकामं जजान त्वष्टुरर्वा जायत आशुरश्वः ।
त्वष्टेदं विश्वं भुवनं जजान बहोः कर्तारमिह यक्षि होतः ॥ 9 ॥

व्याख्या:

"अर्वा" इयर्ति गच्छति अर्वा । "अन्येभ्योऽपि दृश्यन्ते (पा. 3.2.75) इति अर्तेर्वनिप् ।

563. शब्द:

"देवद्रीचा मनसा दीध्यानः"

मं. उप प्रागाच्छसनं वाज्यर्वा देवद्रीचा मनसा दीध्यानः ।
अजः पुरो नीयते नाभिरस्यानु पश्चात्कवयो यन्ति रेभाः (23)

व्याख्या:

देवान् प्रत्यंचति देवद्र्यक् तेन देवद्रीचा " विष्वग्देवयोश्च टेरद्र्यंचतावप्रत्यये" (पा. 6.3.92) इति देव शब्दस्य टेरद्र्यंचतौ

पदैकदेशः । दीधीते दीध्यानः । "दीधीङ्. दीप्तिदेवनयोः" शानच्प्रत्ययः । देवान्प्रति गतेषु चित्तेषु दीध्यमानः ।

364. शब्दः

" ऋतस्य यानान्मध्वा"

मं. तनूनपात्पथ ऋतस्य यानान्मध्वा समञ्जन्त्स्वदया सुजिह्व ।
मन्मानि धीभिरुत यज्ञमृन्धन्देवत्रा च कृणुह्यध्वरं नः (26)

व्याख्याः

यान्ति यैस्तेषु वा ते यानास्तान् " करणाधिकरणयोः" (पा. 3.3.117) इति ल्युट्प्रत्ययः । ऋतो यज्ञः तस्य गमनसाधनमार्गान् हवींषि तान्मध्येत्यर्थः ।

365. शब्दः

महिमानमेषामुपस्तोषाम"

मं. नराशंसस्य महिमानमेषामुपस्तोषाम यजतस्य यज्ञैः ।

ये सुक्रतवः शुचयो धियंधाः स्वदन्ति देवा उभयानि

हव्या {27}

व्याख्या:

महिमानमेषामुपस्तोषाम" महिमानं महाभाग्यमेषां देवानां मध्ये वयमुपस्तोषाम उपस्तुमः । स्तौतेर्लेटि उत्तमैकवचने "सिब्बहुलं लेटि" { पा. 3.1.34 } इति सिप्प्रत्यये रूपम् ।

366. शब्दः

"आजुह्वान ईड्यो"

मं. आजुह्वान ईड्यो वन्द्यश्चा याह्यग्ने वसुभिः सजोषाः

त्वं देवानामसि यह्व होता स एनान्यक्षीषितो यजीयान् (28)

व्याख्या:

आजुह्वानः आहूयते आह्वयति देवानित्याजुह्वानः ।
ह्वयतेः शपः श्लुः "ह्व सम्प्रसारणम्" (पा. 6.1.32)
इत्यभ्यासस्य सम्प्रसारणम्, शानचि । ईड्यः स्तुत्यः ।

367. शब्दः

" यजीयान् "

व्याख्या:

यजीयान् यजतीति यष्टा अत्यन्तं यष्टा यजीयान्

ईयसुनि " तुरिष्ठेमेयः सु° [पा. 6.4.154] इति तृलोपः ।

368. <u>शब्दः</u>

"प्रचोदयन्ता विदथेषु कारू"

मं. दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै । प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता [32]

<u>व्याख्या:</u>

विदथेषु यज्ञेषु प्रचोदयन्ता प्रचोदयन्तौ [illegible] स्वजः प्रेरयन्तौ । कारू कुर्वन्तौ कारू " उणादयो बहुलम् [पा. 3.3.1] इत्युण् । स्तवं कर्तारौ ।

369. <u>शब्दः</u>

" "धनुः शत्रोरपकामं"

मं॰ धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम ।
धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥2॥

व्याख्या:

धनुः शत्रोरपकामं" मनोरथाभावं कृणोति करोति ।
कामस्याभावोऽपकामम् । "अव्ययं विभक्ति (पा. 2.1.6) इत्यादिना
अर्थाभावेऽव्ययीभावः ।

370. शब्दः

"संविदाने"

मं॰ ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे ।
अप शत्रून्विध्यतां संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान्॥4॥

व्याख्या:

संविदाने संविदाते ते संविदाने "समोगमि०-" पा. 1.3.29 इत्यादिना शानच् । परस्परं संकेतं कुर्वाणे ।

371. शब्दः

" इषवः शर्म यंसन्"

मं. सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः संनद्धा पतति प्रसूता यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन् ॥ 48 ॥

व्याख्या:

तत्र एते इषवः बाणाः अस्मभ्यं शर्म सुखं यंसन् यच्छन्तु । "यमु उपरमे" लेटि तिप् अडागमे "सिब्बहुलं लेटि" पा. 3.1.34

इति सिंहागमे यंतम्निति रूपम् । सुखं ददतु ।

372. शब्दः

"अपामोज्मानं"

मं. दिवः पृथिव्याः पर्योज उद्भृतं वनस्पतिभ्यः पर्याभृतं सहः । अपामोज्मानं परि गोभिरावृतमिन्द्रस्य वज्रं हविषा रथं यज (55)

व्याख्याः

अपां जलानामोज्मानं तेजः सम्भृतम् । ओज बल तेजसोः इति धातोः "अन्येभ्योऽपि दृश्यन्ते (पा. 3.2.75) इति मनिन् । ओजयति बलिनं करोतीति ओज्मा तद् यथा भूमीवृष्ट-जलानां तेजश्चतुष्टयेन निर्मितमित्यर्थः ।

373. शब्द:

°अष्टाकपाल:-

मं. अग्नये गायत्राय त्रिवृते राथन्तरायाष्टाकपाल इन्द्राय त्रैष्टुभाय पंचदशाय बार्हतायैकादशकपालो विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो द्वादशकपालो मित्रावरुणाभ्या-मानुष्टुभाभ्यामेकवि शाभ्यां वैराजाभ्यां पयस्या बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय चरुः सवित्र औष्णिहाय त्रयस्त्रिं-शाय रैवताय द्वादशकपालः प्राजापत्यश्चरुरदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोऽनुमत्या अष्टाकपालः ॥ 60॥

व्याख्या:

अष्टसु कपालेषु संस्कृतोऽष्टाकपालः "तद्धितार्थोत्तर पद-

समाहारे च" (पा. 2.1.51) इति समासः । "अष्टनः कपाले हविषि" (पा. 6.3.46) इत्यष्टन्शब्दस्य दीर्घः ।

375. शब्दः

सहस्रशीर्षा

मं. सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं सर्वतः स्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥1॥

व्याख्या:

सहस्रसंख्यानि शीर्षाणि शिरांसि यस्य सः "शीर्षंश्छन्दसि" (पा. 6.1.60) इति शिरःशब्दस्य शीर्षन्नादेशः । शिरोग्रहणं सर्वावयवोपलक्षणम् । यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तः पातित्वात् तस्यैवेति सहस्रशीर्षत्वम् ।

575. <u>शब्दः</u>

"रुचाय"

मं. यो देवेभ्य आतपति यो देवानां पुरोहितः पूर्वो यो
देवेभ्यो जातो नमो रुचाय ब्राह्मये {20}

<u>व्याख्याः</u>

रुच रोचतेऽसौ रुचस्तस्मै रुचाय दीप्यमानाय "इगुपध"
{वा. 3.1.135} इति कप्रत्ययः ।

576. <u>शब्दः</u>

"जनिता"

376.

मं.

स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि

विश्वा । यत्र देवा अमृतमानशानास्तृतीये धामन्नध्यैरयन्त ॥10॥

व्याख्या:

जनिता जनयिता । "जनिता मन्त्रे ( पा. 6.4.53 )

इति णिचो लोपः ।

377. शब्दः

"अमृतमानशाना"

व्याख्या:

अमृतं मोक्षप्रापकं ज्ञानं यत्र ब्रह्माणि आनशानाः आप्नुवानाः

अश्नुवते आनशानाः "बहुलं छन्दसि" (पा. 2.4.76) इत्यशे-र्जुहोत्यादित्वेन द्वित्वे शानचि अभ्यासस्य नुडागमः । ब्रह्मनिष्ठं ज्ञानं प्राप्ताः सन्तः सर्वे देवा मोदन्त इति भावः ।

378. शब्दः

"द्रविणस्युः"

मं. अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतः (9)

व्याख्या:

द्रविणस्युः द्रविणो धनमिच्छति द्रविणस्यति "सुप आत्मनः क्यच् क्याच्छन्दसि" (पा. 3.2.170) इति क्यजन्तात् उप्रत्ययः । हविर्लक्षणं धनमिच्छन् ।

379. शब्दः

"अनवद्यम्"

मं. आ वक्षि नृपतिं तेज आनट् शुचि रेतो निषिक्तं
द्यौरभीके । अग्निः शर्धमनवद्यं युवानं स्वाध्यं जनयत्सूदयच्च ।

व्याख्या:

अनवद्यं निर्दोषम् अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु"
(पा. 3.1.101) इति गर्ह्यार्थेऽवद्यमिति निपातः । न अवद्यमनवद्य
मगर्ह्यं प्रशस्यम् ।

380. शब्दः

"पुनाति"

मं. अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु ।
सं जास्पत्यं सुयममाकृणुष्व शत्रूयतामभितिष्ठा महांसि (12)

व्याख्या:

उत्कृष्टतव द्युम्नानि उत्तमानि उत्कृष्टानि सन्तु
"द्युम्नं द्योततेर्यशो वान्नं वा" (निरु. 5.5) इति यास्कः ।

381. शब्दः

" सुयमम् "

व्याख्या:

सुयमम् सुनियमम् जितेन्द्रियमन्योन्यानुरागं समाकृणुष्व कुरु ।
सुष्ठु यम्यते सुयमम् " ईषद्दुःसुषु" (पा. 3.3.127) इति खल् प्रत्ययः ।

382. <u>शब्दः</u>

" अग्नेः शर्मण्यनागा"

मं. महो अग्नेः सन्निधानस्य शर्मण्यनागा मित्रे वरुणे स्वस्तये । श्रेष्ठे स्याम सवितुः सवीमनि तद्देवानामवो अद्या वृणीमहे ॥ 17 ॥

<u>व्याख्या:</u>

अग्नेः शर्मणि शरणे आश्रये मित्रे वरुणे च अनागाः अनागसः "सुपां सुलु" ॥ पा. 7.1.39 ॥ इति जसः सुः । अग्नि मित्रवरुणे ष्वपराधरहिताः ।

383. शब्दः

" रता दधीत वृषभम्"

मं. आ सुते सिंचत श्रिय रोदस्योरभिश्रियम् । रसा दधीत वृषभम् । तं प्रत्नथायं वेनः ( 21 )

व्याख्या:

रसा नदी " रसतेः शब्दकर्मणः ( निरु. 11.25 ) इति यास्कः । रसा नदी वृषभं वर्षितारं सोमं दधीत पुष्णाति । दधातेर्लिङ् । नदी समीपे हि सोमोत्पत्तेः ।

३८५. शब्दः

" किं त इत्था"

मं. कुतस्त्वमिन्द्र माहिनः सन्नेको यासि सत्पते किं त इत्था । संपृच्छसे समराणः शुभानैर्वोचेस्तन्नो हरिवो

यतो अग्मे । महाँ२।। इन्द्रो य ओजसा कदा चन स्तरीरसि कदा चन प्रयुच्छसि ( 27 )

व्याख्या:

किं ते तव इत्था गमने को हेतुः किं प्रयोजनम् । "था हेतौ च छन्दसि" (पा. 2.3.26) इतीदमः था प्रत्ययः । "एतेतौ रथोः "(पा. 5.3.4) इतीदम इदादेश : ।

385. शब्दः

"हरिवो

अ. व्याख्या:

हरयोऽश्वा अस्य सन्तीति हरिवान् "मतुवसो रुः संबुद्धौ

छन्दसि ॥ पा. 8.3.1 ॥ इति रुः । हे हरिवः इन्द्र, नष्टश्मश्रुं

तत् एकाक्षिमनकारस्य । वीर्यैः बुधि ।

3.6. **छन्दः**

"वातजूतः, त्मना"

मं. विभ्राड्बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् ।
वातजूतो यो अभिरक्षति त्मना प्रजाः पुपोष पुरुधा
वि राजति ॥ 30 ॥

**व्याख्या:**

वातजूतः वातेन प्रेरितः । त्मना " मन्त्रेष्वाङ्यादेरात्मनः" ॥ पा. 6.4.141 ॥ इत्याकार लोपः । जुष कौटिल्ये "जुहुवरेश्छन्दसि"

(पा. 7.2.31) इति हु आदेशः ।

387. शब्दः

"सूर्य"

मं. बण्महाँ2।। असि सूर्य बडादित्य महाँ 2।। असि ।
महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँ 2।। असि (39)

व्याख्या:

हे सूर्य, सुवति प्रेरयति कार्येषु जगदिति सूर्यः "राजसूयसूर्य- (पा. 3.1.114) इत्यादिना क्यबन्तो निपातः ।

2388. शब्दः

"स्थद्"

मं.	वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः ।
करतां नः सुराधसः (46)

व्याख्या:

प्रकर्षेण रक्षको भुवद् भवतु । भवतेर्व्यत्ययेन तुदादित्वात् श प्रत्ययः "इतश्चलोपः" (पा. 3.4.97) इति तिप् इलोपः धातोरुवङ् ।

389. शब्दः

"पर्वतासः"

मं.	अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः ।
यः शंसते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्माँ 2।।
अवन्तु देवाः (50)

म/

व्याख्या:

पर्वतासः पर्वाणि उत्सवा विद्यन्ते येषां ते पर्वताः उत्सववन्तः "तप्पर्वमरुद्भ्याम्" (पा. 5.2.122) इति तप्प्रत्ययः ।

390. शब्दः

"विदद्"

मं. विदद्यदी सरमा रुग्णमद्रेर्महि पाथः पूर्व्यं सध्र्यक्कः अग्रं
नयत्सुपद्यक्षराणामच्छा रवं प्रथमा जानती गात् (59)

व्याख्या:

विदॢ लाभे "पुषादि" (पा. 3.1.55) इत्यादिना च्लेरङादेशः अङ्भाव आर्षः ।

391. शब्दः

"हिरण्यजिह्वः"

मं. अदब्धेभिः सवितः पायुभिष्ट्वं शिवेभिरद्य परिपाहि नो गयम् । हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नो अघशं स ईशत (69)

व्याख्याः

हिरण्यवद् हिता जिह्वा यस्य सत्वदात् ।
यद्वा "हिरण्या हितरमणीया जिह्वा ज्वाला यस्येति वा "हिरण्यं कस्माद्धियताद्धि हितरमणीयं भवतीति वा (नि. 2.13.92)
इति यास्कोक्तेः ।

392. **शब्दः**

"प्रवीरवा"

मं. प्रकृष्टा वनेरूप नहि रुपशमविदन्नन्यमस्माद्वैश्वानरात्पुरएतारं मग्नेः । एमेनमवृधन्नमृता अमर्त्यं वैश्वानरं क्षैत्रजित्याय देवाः (60)

**व्याख्या:**

प्रकृष्टा वीरा हानोत्कटा ऋत्विजो येषां तोमानां ते प्रवीराः " सुपां सुलुक्" (पा. 7.1.39) इति जसो याजादेशः ।

393. **शब्दः**

"अतन्त्यथा अवयात्प्रयतिः"

मं. तिरश्चीनो विततो रश्मिरेषामधः स्विदासी३ दुपरिस्वि-दासी३त् । रेतोधा आसन्महिमान आसन्त्स्वधा अवस्तात्प्रयतिः परस्तात् ॥ 74॥

व्याख्या:

एवं मायायामीश्वरः सर्वं जगत्सृष्ट्वा स्वयंतानुप्रविश्य भोक्तृभोग्यरूपेण विभागं कृतवानित्यर्थः । तयो भोक्तृभोग्ययोर्मध्ये स्वधान्नं भोग्यप्रपंचोऽवस्तादवरो निकृष्ट आसीत् । प्रयतिः प्रयति भोक्ता परस्तात् परः उत्कृष्टः भोक्तृ प्रपंचाधीनं भोग्यप्रपंचं कृतवानित्यर्थः । "विभाषा परावराभ्याम् ॥ पा. 5.3.29 ॥ इति प्रथमार्थेऽस्तातिप्रत्ययः ।"अस्ताति" च ॥ पा. 5.3.40॥ इत्यवर शब्दस्यावा देशः ।

~~३९४~~

३९४. शब्दः

"आङ्. गुधेः"

मं. उक्थेभिर्वृत्रहन्तमा या मन्दाना चिदा गिरा ।
आङ्गूषैराविवासतः (76)

व्याख्या:

आङ्गूषैः आघोषैः: चित् लौकिक वाक्स्तोमैः रचित स्तुतौ आ आगच्छतः "आङ्गूषः स्तोम आघोषः" (नि. 5.11.) इति यास्कः ।

395. शब्दः

"अनुत्तमम्"

मं. अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ अस्ति देवता विदानः । न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध (79)

व्याख्या:

"नुद प्रेरणे" अस्य निष्ठायां "नसत्तनिषत्त— [पा. 8.2.61] इत्यादिना अनुत्तमिति निपातः ।

396. शब्दः

"आचक्रे"

मं. ऋधगित्था स मर्त्यः शशमे देवतातये । यो नूनं मित्रावरुणा-
वभिष्टय आचक्रे हव्यदातये [87]

व्याख्या:

आचक्रे आकुरुते सेवते "गन्धनावक्षेपण" — [पा. 1.3.32] इत्यादिना करोतेः सेवनार्थे आत्मनेपदम् ।

शब्दः

597. नर्यः

मं. प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः {89}

व्याख्या:

नर्यं नृभ्यो मनुष्येभ्यो हितम् "उगवादिभ्यः- {पा. 5.1.2} इति यत् ।

598. शब्दः

"कनिक्रदत्"

मं. चन्द्रमा अप्स्वन्तरा सुपर्णो धावते दिवि । रयिं पिशङ्गं बहुलं पुरुस्पृहं हरिरेति कनिक्रदत् {90}

व्याख्या:

कनिक्रदत् पर्जन्यरूपात्स्वर्गतनितं कुर्वन् ।

"दाधर्ति"- (पा. 7.4.65) इति निपातः ।

399. बृहद:

"ओजसा चनोहितो"

मं. दिवि पृष्टो अरोचताग्निर्वैश्वानरो बृहन् । क्ष्मया
वृधान ओजसा चनोहितो ज्योतिषा बाधते तमः ॥12॥

व्याख्या:

अतएव ओजसा च चनोहितः ओषधिपाकक्रमेण तेजसा चनसेऽन्नाय हितः "चन इत्यन्ननाम" (नि. 6.16) अन्ननिष्पादक इत्यर्थः ।

६००. शब्दः

"विष्णवि"

मं. प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत । वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥ ९६॥

व्याख्या:

विष्णवि वेवेष्टि व्याप्नोति विष्णुः तस्मिन् सर्वशरीर-व्यापके । सप्तम्येक "घेर्ङिति (पा. 7.3.111) इति गुणेऽऽदेशः यदा विष्णवि विष्णौ यज्ञेऽभिषुतस्ये ति संबन्धः ।

६०१. शब्दः

"विदथेषु"

402. शब्दः

" प्रज्ञानम्, चेतः "

मं. यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्न ऋते किंचन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु ॥३॥

व्याख्या:

प्रज्ञानम् विशेषेण ज्ञानजनकम् प्रकर्षेण ज्ञायते येन तत् प्रज्ञानम् "करणाधिकरणयोश्च" (पा. 3.3.117) इति करणे ल्युट् प्रत्ययः । इत अपि यत् मनः चेतः चेतयति सम्यक् ज्ञापयति तच्चेतः ।

403. शब्दः

"येन यज्ञस्तायते "

मं. येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् । येन यज्ञस्तायते सप्तहोता तन्मे मनः शिव संकल्पमस्तु (५)

व्याख्या:

येन च मनसा यज्ञोऽग्निष्टोमादिः तायते विस्तार्यते । तनोतेर्यकि" (पा. ६.४.४४) इत्याकारः ।

४०५. शब्दः

"स्तोष"

मं. पितुं नु स्तोषं महो धर्माणं तविषीम् । यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् (7)

व्याख्या:

"स्तोषं" स्तौतेर्मिपि "इतश्चलोपः परस्मैपदेषु (पा. 3.4.97) इति इकारलोपे "लेटोऽडाटौ" (पा. 3.4.94) इत्याडागमे "सिब्बहुलं लेटि" (पा. 3.1.34) इति सिप्प्रत्यये लोपे गुणे च रूपम् ।

405. शब्दः

"प्रजां देवि दिदिड्ढि नः"

मं. सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।
जुषस्व हव्यमहुतं प्रजां देवि दिदिड्ढि नः (10)

व्याख्या:

हे देवि, अस्मभ्यं प्रजां च दिदिड्ढि दिश देहि । "बहुलं

छन्दसि (पा. 2.4.76) इति विभ्रतेः शपः श्लुः ततो भित्वादिः ।

५०६. <u>शब्दः</u>

"प्रवीता वृष्णं जजान"

मं. उत्तानायामवभरा चिकित्वान्सद्यः प्रवीता वृष्णं जजान ।
अरुषस्तूपो रुशदस्य पाज इडायास्पुत्रो वयुनेऽजनिष्ट (।५)

<u>व्याख्या:</u>

याऽरणिः प्रवीता कामिता सती वृषणं सेक्तारं अग्निं सद्यः तत्कालं जजान जनयति "छन्दसि लुङ्लङ्लिटः, (पा. 3.4.6) इति लिट् । सोऽग्निर्जात इत्यर्थः ।

५०७. <u>शब्दः</u>

"हव्याय वोढवे"

408. शब्दः

"हरिवः"

मं. न ते दूरे परमा चिद्रजांस्या तु प्रयाहि हरिवो हरिभ्याम्
स्थिराय वृष्णे सवना कृतेमा युक्ता ग्रावाणः समिधाने
अग्नौ (1)

व्याख्या:

हे हरिवः, हरी अश्वौ विद्येते यस्य स हरिवान् तस्य संबोधनम्
"मतुवसोः - (पा. 8.3.1) इति रुत्वम् विसर्गश्च साधु ।

409. शब्दः

"भरेजुषाम्"

म.१.९१.

मं. अषाळ्हं युत्सु पृतनासु पप्रिं स्वर्षामप्सां वृजनस्य गोपाम् ।
भरेषुजां सुक्षितिं सुश्रवसं जयन्तं त्वामनु मदेम सोम ॥२०॥

व्याख्या:

भरेषु संग्रामेषु जयति शत्रूनिति भरेषुजाः । "हलदन्तात्सप्तम्याः" ॥ पा. ६.३.९॥ इति अलुक् । जयतेरौणादिको डप्रत्ययः।

४१०. शब्दः

"ई-शिषे वीर्यस्य"

मं. देवेन नो मनसा देव सोम रायो भागं सहसावन्नभियुध्य
मा त्वा तनदीशिषे वीर्यस्योभयेभ्यः प्रचिकित्सा गविष्टौ ॥२३॥

व्याख्या:

कुतस्त्वमेवमुच्यस इति चेत् यतस्त्वं वार्यस्य ईशिषे परिकर्मणा ईश्वरो भवति " अधीगर्थदयेशाम् [ पा. 2.3.52 इति कर्मणि षष्ठी ।

411. शब्दः

"पूर्व्यासः"

मं. ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे
तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव [27]

व्याख्या:

पूर्वैः पूर्व्यासः कृताः "पूर्वैः कृतमिनियौ च" [ पा. 4.4.133]
इति यत्प्रत्ययः ।

412. **शब्दः**

"वाजसातौ"

मं. अभ्यश्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषाम् ।
अद्यूत्येऽवसे निह्वये वां वृधे च नो भवतं वाजसातौ (29)

**व्याख्या:**

वाजसातौ वाजानामन्नानां सातिः संभजनम् यस्मिन् स वाजसातिः तस्मिन् यज्ञे नोऽस्माकं वृधे वृद्धौ भवतम् ।

**शब्दः**

413. "मामहन्ताम्"

**व्याख्या:**

मह पूजायाम् "बहुलं छन्दसि" (पा. 2.4.76) इति शपः श्लुः । "श्लौ" (पा. 6.1.10) द्वित्वम् " तुजादीनां दीर्घोऽभ्यासस्य" (पा. 6.1.7) इत्यभ्यास दीर्घः ।

414. शब्दः

"वसुविदम्"

मं. समध्वरायोषसोऽनमन्त दधिक्रावेव शुचये पदाय । अर्वाचीनं
वसुविदं भगं नो रथमिवाश्वा वाजिन आवहन्तु ॥ 39॥

व्याख्या:

वसु धनं विन्दतीति वसुविदः इगुपध" -[पा. 3. 1. 135]
इति कः ।

415. शब्दः

"तारिष्टम्"

मं. आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना ।
प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ॥47॥

५१५.

व्याख्या:

तारिष्टम् तरतेर्लुङि. मध्यमद्विवचनम् " बहुलं छन्दस्यमाङ्-योगेऽपि [ पा. 6.4.75] इत्यडभावः ।

५१६. ऋग्वेदः

"जीरदानुम्"

मं. एष वः स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः
एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् [५८]

व्याख्या:

जीवयतीति जीरदानुस्तम् । जीवेरौणादिको रदानुप्रत्ययः

"लोपोव्योर्वलि" [ पा. 6.1.66 ] इति वलोपः । जीवितदातृ धनमन्नं च वयं प्राप्नुयामेति प्रार्थना ।

517. <u>शब्दः</u>

"ईमहे"

मं. उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उप प्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा [ 56]

<u>व्याख्या:</u>

ईमहे याचतिकर्मसु पठितः "ई गतौ" दिवादित्वा दागतस्य श्यनश्छान्दसो लोपः ।

418. शब्दः

"प्राशुः मा८/४

व्याख्या:

प्राशुः आशु शब्दे दीर्घश्छान्दसः । अत्र संहितायां द्व्यचोऽतस्तिङः (पा. 6.3.135) इति दीर्घः ।

419. शब्दः

"सौरभेयं"

मं. अनड्वाहमुन्वारभामहे सौरभेय स्वस्तये । स न इन्द्र इव देवेभ्यो वह्निः संतारणो भव (13)

व्याख्या:

सौरभेयं सुरभ्याः अपत्यम् "स्त्रीभ्यो ढक् (पा. 4.1.120) इति ढक् ।

420. <u>शब्दः</u>

"हविषा वृधानः"

मं. आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि ।
घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमान्त्स्वाहा
[17]

<u>व्याख्या:</u>

हविषा वृधानः वर्धितो वृधानः " बहुलं छन्दसि"
[ पा. 2.4.73] इति शपो लुक् ।

421. <u>शब्दः</u>

"रिप्रवाहः"

मं. क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु

रिप्रवाहः । इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् [19]

व्याख्या:

रिप्रवाहः "रिप्रमिति पापनाम" [नि. 4.21]

रिप्रं पापं वहति नाशयति रिप्रवाहः ।

422. ऋक्षरः

"अनृक्षरा"

मं. स्योना पृथिवि नो भवानृक्षरा निवेशनी यच्छा नः
शर्म सप्रथाः । अप नः शोशुचदघम् [21]

व्याख्या:

न सन्ति ऋक्षराः कण्टकाः यस्यां सा अनृक्षरा ।

423. शब्दः

"निवेशनी"

मं. स्योना पृथिवि नो भवानृक्षरा निवेशनी यच्छा नः शर्म सप्रथाः । अप नः शोशुचदघम् {2}

व्याख्या:

निविशन्ति जनाः यस्यां सा निवेशनी साधु-प्रतिष्ठाना" करणाधिकरणयोश्च {पा. 3.3.117} इति ल्युट् ।

424. शब्दः

"शं, योः"

मं. अहानि शं भवन्तु नः शं रात्रीः प्रतिधीयताम् । शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रा वरुणा रातहव्या । शं न इन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय शं योः ( ॥)

व्याख्या:

शं रोगाणाम् शमनाय, योः यवनाय पृथक्करणाय च भयानाम् । रोगं भयं च निवर्त्य सुखदौ भवतामित्यर्थः । देवता द्वन्द्वे च° (पा. 6.3.26) इति सर्वत्र पूर्वपदस्य दीर्घः ।

425. शब्दः

° विघूर्णितान

मं. अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः । (1.17)

<u>व्याख्या:</u>

विषूच् अंचन्तीति विषूच्यः ताः नानांचना दिशो रश्मीन् वा वसानः । विषूवन्तात् " उगितश्च " (पा. 4.1.6) इति ङीपि " अचः " (पा. 6.4.138) इत्यकारलोपे "चौ" (पा. 6.3.138) इति पूर्वपददीर्घः ।

426. <u>शब्दः</u>

" अवस्यवे"

मं. समुद्राय त्वा वाताय स्वाहा सरिराय त्वा वाताय स्वाहा । अनाधृष्याय त्वा वाताय स्वाहा प्रतिधृष्याय त्वा वाताय स्वाहा । अवस्यवे त्वा वाताय स्वाहा शि-मिदाय त्वा वाताय स्वाहा { 7}

व्याख्या:

अवो रक्षणमिच्छति अवस्यति अवस्यतीत्यवस्युः "सुप आत्मनः क्यच्" "क्याच्छन्दसि " { पा. 3.2.170} इत्युप्रत्ययः । अवनशीलाय ।

427. शब्दः

"विश्वदेव्यावते"

मं. इन्द्राय त्वा वसुमते रुद्रवते स्वाहेन्द्राय त्वादित्यवते स्वाहे-न्द्राय त्वाभिमातिघ्ने स्वाहा । सवित्रे त्व ऋभुमते विभुमते वाजवते स्वाहा बृहस्पतये त्वा विश्वेदेव्यावते स्वाहा {8}

व्याख्या:

विश्वदेव्यावते विश्वेषां देवानां समूहो विश्वदेव्यम् तदस्यास्ति विश्वदेव्यवान् तस्मै । "मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ (पा. 6.3.131) इति दीर्घः । सर्वदेव सहिताय जुहोमि ।

428. शब्दः

"अङ्गिरस्वते"

मं. यमाय त्वाङ्गिरस्वते पितृमते स्वाहा । स्वाहा घर्माय स्वाहा घर्मः पित्रे (1)

व्याख्या:

अङ्गिरस्वते अङ्गिरसो मुनयोऽस्य सन्ति अङ्गिरस्वान् "अयस्मयादीनि छन्दसि" (पा. 1.4.20) इति भ-संज्ञायाम् सस्य विसर्गाभावः ।

429. <u>शब्दः</u>

"अमेनि नृम्णानि"

मं. इषे पिन्वस्वोर्जे पिन्वस्व ब्रह्मणे पिन्वस्व क्षत्राय पिन्वस्व द्यावापृथिवीभ्यां पिन्वस्व । धर्मासि सुधर्मामेन्यस्मे नृम्णानि धारय ब्रह्म धारय क्षत्रं धारय विशं धारय ॥14॥

<u>व्याख्या:</u>

हे धर्म, अमेनि " मिनु हिंसायां" मिनोति हिनस्तीति मेनिः न मेनिरमेनिः "सुपां सुलुक् " (पा. 7.1.39) सुलोपः । अमेनिः अहिंसन्, अक्रुध्यन् सन् अस्मासु नृम्णानि धनानि स्थापय ।

430. <u>शब्दः</u>

" अमीमं महिनादिवं"

व्याख्या:

अधीगर्थदयेशां कर्मणि " कर्मणोः (पा. 2.3.5)

इति द्वितीया । एवं सर्वदा यायजूकाः स्यामेत्यर्थः ।

432. मूलम्:

"ईशावास्यमिदम्"

मं. ईशा वास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ।

तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥1॥

व्याख्या:

"ईश ऐश्वर्ये" क्विप् ईष्ट इतीट् ईश् परमेश्वरः । स हि सर्वजन्तूनामात्मा सन् सर्वमीष्टे । तेन स्वेनात्मनेशा ईशा प्रत्यगात्मतया सर्वं वास्यम् " वस आच्छादने" "ऋहलोर्ण्यत्" (पा. 3.1.124) इति ण्यत् प्रत्ययः । आच्छादनीयं परमात्मना

434. <u>शब्दः</u>

"मनसो जवीयः"

मं. असुर्या नाम ते लोका अन्धेन तमसावृताः । तांस्ते
प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ ३॥

<u>व्याख्या:</u>

मनसः संकल्पविकल्पात्मकात् जवीयः वेगवत्तरम् जवो'स्यास्तीति जववत् अत्यन्तं जववत् जवीयः । ईयसुनि कृते "विन्मतोर्लुक्" [पा. 5.3.65] इति मतुपो लुक् । नन्वनेजदेजयतोर्विरोधः ।

435. <u>शब्दः</u>

"आत्मानं विचिकित्सति"

मं. यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विचिकित्सति (6)

व्याख्या:

अध्येवात्मेति सर्वेषु चात्मानं निर्विशेषं पश्यति । तत्स्वरूपदर्शनान्न विचिकित्सति न संदेग्धि " कित रोगापनयने संशये च" इति धातोः "गुप्तिज्किद्भ्यः सन्" (पा. 3.1.5) इति स्वार्थे सन् प्रत्ययः ।

436. शुद्धः

" अकायमव्रणमस्नाविरम्"

मं. स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् । कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः (8)

## षष्ठोऽध्यायः

### नैगमानां शब्दानां निर्वचन प्रकारः

'अनवगत संस्कारांश्च निगमान् ।[1]

अनवगत संस्कारान् अविज्ञात संस्कारानित्यर्थः । येषां प्रकृति प्रत्ययादि संस्कारो न तात्पर्येन ज्ञायते, ते निगमाः उच्यते ।

नैगम शब्दाः

जहा (1)

जघानेत्यर्थः ।

अत्र हन्तेर्जहातेश्च सन्देह इति भाष्यकारेणाप्युक्तं जघानेत्यर्थः इति ।

मर्या (2)

"को नु मर्या अमिथितः सखा सखायमब्रवीत् ।
जहा को अस्मदीषते (ऋ 8.45.37)

---

1. नि. अ. 4., पृ. 163.

मर्या इति मनुष्य नाम । मर्यादाभिधानं वा स्यात् । मर्यादा मर्यैरादीयते मर्यादामर्यादिनो विभागः । मेथति राक्रोश कर्मा । अपापकं शपान कञ्चं जातु । कोऽन्यमाक्रोशः धनायते ।

निधा [3]

निधा पाश्या भवति । यन्निधीयते । पाश्या पाश [जाल] समूहः । पाशः पाशयतेर्विपाशनात् ।

निधा पाश्याभवतिइति । यस्यामिव तत्ववचनम् । यो बालमयः स्नायुमयो वा पाश समूहः पक्षिग्रहणार्थः, स पाश्येत्युच्यते । यतः यस्मात् अयं निधीयते नीचैः धार्यते पक्षिग्रहणार्थम् । पाशः पाशयते, बन्धनार्थस्य विपाशनात् तेन हि पाश्यते पक्षिबध्यत इत्यर्थः ।

शितामः [4]

"पार्श्वतः श्रोणितः शितामतः" । [यजु. 21/43]

पार्श्वं पर्शुमयमङ्ग भवति । पर्शुः स्पृशतेः । संस्पृष्टोऽसि । संस्पृष्टा पृष्ठदेशम् पृष्ठं स्पृशतेः । संस्पृष्टमङ्गैः । अङ्गमङ्गनात् अंचनाद्वा ।

श्रोणिः श्रोणतेर्गति चलनकर्मणः । श्रोणिश्चलतीव गच्छतः । दोः शितामं भवति । दो र्द्रवतेः । योनिः शितामेति शाकपुणिः । विषितो भवति श्यामतो यकृत इति तैटीकिः श्यामं श्यायतेः । यकृद् यथा कथा च कृत्यते । शिति मांसतो मेदस्त इति गालवः । शितिः श्यतेः । मांसं माननं वा । मानसं वा । मनोऽस्मिन्त्सीदतीति वा । मेदो मेद्यतेः ।

भावार्थः

शितामं इति । एतदनवगतम् । अभिधेयं चानुपलब्धैव निगममेव प्रथमं पठत्याचार्यः । पठत्याचार्यः "पार्श्वतः श्रोणितः शितामतः" इति पशु हविषः प्रैषेऽयं मन्त्रशेषः । पार्श्वतः अङ्गात् एव श्रोणितः शितामतः " [illegible] । पशु हविष्क कृतम् इन्द्राग्नी ! तृप्यतमेतद् हविः । किमर्था स्युरिदम् ? उच्यते – संस्पृष्टा पुरोडाश अङ्गमङ्गनात् अङ्गि.मङ्गनात् गत्यर्थ एव । गति चलनकर्मणः गतिनिमित्तं चलनं यस्य कर्म सोऽयं गतिचलनकर्मा तस्य । श्रोणिश्चलतीव

स्थानात् पशोः गच्छतः । दोः शितम् भवति बाहुरित्यर्थः । दोः द्रवतेः तस्य हि प्राणेन पशुर्द्रवति । योनिः शितमः इति शाकपूणिः आचार्यो मन्यते । न च गुदः विषितः व्याप्तः न पुरीषेण भवति इयमस्तौ यकृतः इति तैटीकिः आचार्यो मन्यते । यकृत यथा कथा च कृत्यते छिन्न इत्यर्थः । शिति मांसतो मेदस्तः इति गालवः आचार्यो मन्यते । श्वेतान्मांसात् शितिमांसतः । शितिः श्यतेः तनूकरणार्थस्य । मनोऽस्मिन् सीदतीति वा सर्वस्य हि भसि मनः सीदति । मेदः मेदतेः स्नेहनार्थस्य ।

मेहना (5)

"यदिन्द्र चित्र मेहनास्ति त्वादातमद्रिवः । राधस्तन्नो विदद्वस उभया हस्त्या भर" ॥ (ऋ 5.39.1) यदिन्द्र चित्रं चायनीयं महनीयं धनमस्ति । यन्म इह नास्तीति वा । त्रीणि मध्यमानि पदानि त्वया नस्तद्दातव्यम् । अद्रिवन् । अद्रिवन् । अद्रिरादृणात्येतेन । अपि वात्तेः स्यात् ।

दमूना (6)

दभूना दम मना वा । दान मना आन्त मना वा ।
अपि वा दम इति गृहनाम । तन्मनाः स्यात् । मनो मनोतेः ।
दम मनाः अक्रूरमना इत्यर्थः । दातव्यं ममेति यस्य मनति स वा ।
दान्तेषु यम नियमवत्सु पुरुषेषु यस्य मनः स वा दभूनाः ।

सुषिरेषु [6]

ईषणेन् वेषणेन् वार्षणेन् वा । ते मनता सुतस्य भक्षीमहि पित्र्यस्येव धनस्य । प्रवर्ध्य च न आयूंषि सोमराजन् । अहानीव सूर्यो वासराणि। वासराणि विवासनानि गमनानीतिवा । सुषिरः इति । एतदनवगतम् । ईषणेन वा एषणेन् वा अषणेन् वा इति शब्द समाख्यः । निगममेव पठति ।

कृन्तन [7]

कृन्तनेत्यनर्थका उपजना भवन्ति । कर्तन हन्तन-यातनेति । यं स्वार्थः कुकृतेत्युच्यते भवति स एव कृन्तनेति । एवं कर्तन हन्तन यातनेति । सुपिप्पला ओषधीः कर्तनास्मै" [य.सं.12.69] सुपिप्पलाः सुफलाः एताः ओषधीः ।

जठरे [9]

जठरमुदरं भवति । जग्धमस्मिन्ध्रियते धीयते वा ।

जठरम् इति एतदवगतम् । जग्धम् भुक्तमन्नम् अस्मिन् ध्रियते इति जठरम् । उदरमित्यवगमः । जग्धम् खादितमन्नम् । ध्रियते धार्यते ।

तितउ [10]

तितउ परिपवनं भवति । ततवद्वा । तुन्नवद्वा । तिलमात्र-तुन्नमिति वा । "सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।

अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि"

[ऋ. 1.71.2]

सक्तुमिव परिपवनेन पुनन्तः । सक्तुः सचतेः । दुधावो भवति । कसतेर्वा स्याद्विपरीतस्य ? विकसितो भवति । यत्र धीरा मनसा वाचमकृषत प्रज्ञानम् । धीराः प्रज्ञानवन्तो ध्यानवन्तः । तत्र सखानि संजानते। भद्रैषां लक्ष्मीर्निहिताधि वाचि इति । भद्रं भगेन

व्याख्यातम् । अश्नैरं कमनीयं भूतानामभिद्रवणीयम् । भवद्भवतीति वा । भावनवद्वा । भवनीभिर्धाता । भवनाता । भव्यधनाता । अभिनादात्मनोर्वा स्यात्प्रेप्सात्कर्मणः । अन्येर्वा भ्रस्यादाश्लेषकर्मणः । अश्नोतेर्वा स्यादश्नाया कर्मणः ।

तितउ इति । एतदनवगतम् । परिपवनमिति अभिधेय वचनम् । ततेन्नु चर्मणा नद्धं तितउ । तुन्नैर्वा छिद्रैः तद्वत्तितउ । तिलमात्राणि वा तुन्नानि छिद्राणि तस्मिन्निति तितउ ।

मन्दू (11)

मन्दू मदिष्णू । युवां स्थः । अपि वा मन्दुना तेनेति स्यात् । समानवद्भिरित्येतेन व्याख्यातम् ।

ईर्मान्तासः (12)

"ईर्मान्तासः सिलिकमध्यमासः संशूरणासो दिव्यासो अत्याः । हंसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः ।।"

(ऋ. 1..10)

ईर्मान्ताः समीरितान्ताः पृथ्वन्ता वा । सिलिकमध्यमाः संसृतमध्यमाः शीर्षमध्यमा वा । अपि वा शिर आदित्यो भवति । यदनुशेते सर्वाणि भूतानि । मध्ये चैषां तिष्ठति । इदमपीतरच्छिर एतस्मादेव । समाश्रितान्येतदिन्द्रियाणि भवन्ति । संशूरणासः दिव्यासो अत्याः शूरः शवतेर्गतिकर्मणः । दिव्या दिविजाः, अत्या अतनाः । हंसा इव श्रेणिशो यतन्ते । हंसा हन्तेर्घ्नन्त्यध्वानम् । श्रेणिश इति श्रेणिः श्रयतेः । समाश्रिता भवन्ति यदाक्षिषुर्यदा यन् । दिव्यमज्म मजनिमाजिमश्वाः । अत्यादित्यस्तु-तिरश्वस्य । आदित्यादश्वो निस्तष्ट इति ।

जायमानः ॥12॥

"जायमानो वना त्वं यन्मातॄरजगन्नपः । न तत्ते अग्ने प्रमृषे निवर्तनं यद्दूरे सन्निहाभवः" ॥ ऋ. 3.9.2॥

जायमानश्चायमानः । न तत्ते अग्ने प्रमृष्यते निवर्तनम् दूरं यद् सन्निह भवसि जायमानः ।

लोधं ॥14॥

"लोधं नयन्ति पशु मन्यमानः" [ऋ. 3.53.23] लुब्धमृषिं नयन्ति पशुं मन्यमानाः ।

लोधम् इति । एतदनवगतम् लुब्धं इत्यपगमः । लोधं - लुब्धम् तस्तः क्षोमाभूत इति लोभे लुब्धं स्थितमृषिं वा विश्वामित्रं बद्ध्वा पशुं मन्यमानाः- पशुवन्मन्यमाना एते वसिष्ठ लुब्धा नयन्ति ।

शीरम् [15]

"शीरं पावकशोचिषम्" [ऋ. 8.102.11] पावक दीप्तिम् । अनुशायिनमिति वा । आशिनमिति वा ।

शीरम् इति । अग्निरभिधेयः । शीरम्-इति शीरं पावक शोचिषमितिनिगमः । शीरं व्यापिनं अग्निं स्तौमि । पावयितो यस्य शोचिः दीप्तिः तं पावक शोचिषम् ।

तुन्वनि [16]

इदं मेऽदादिदं च मेऽदादित्यृषिः प्रसंख्या याह ।

"सुवास्त्वा अधि तुग्वनि" । [ऋ. 8. 19. 37]

सुवास्तुर्नदी । तुग्व तीर्थं भवति । तूर्णमेतदायन्ति । तुग्वनि इति । एतदनवगतम् । तीर्थम् अभिप्रेतम् । "सुवास्त्वा अधि तुग्वनि" इति नियमः । इदमेव द्रव्य यातं मम दत्तवानसौ राजेत्येवं परिसंख्यानं कृत्वा ऋषि राह उपलभाम् इत्यर्थः । यद्वा सुवास्त्वा नद्या अधि तुग्वनि तीर्थेऽधि । प्रसिद्धं हि गंगायमुना सरस्वत्यादि नदीनां तीरेषु प्रयाग पुष्करादि तीर्थेषु स्नानं दानं च पुण्यकारणमिति ।

अद्मसद् [17] [8]

"उषो अदर्शि शुन्ध्युवो न वक्षो नोधा इवाविरकृत प्रियाणि ।

अद्मसन्न ससतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणाम्" ।।

उषादर्शि शुन्ध्युवः । शुन्ध्युरादित्यो भवति । शोधनात् । तस्यैव वक्षो भासाध्यूढम् । इदमपीतरद्वक्ष एतस्मादेव । अध्यूढं काये । शकुनिरपि शुन्ध्युरुच्यते । शोधनादेव । नोधा ऋषिर्भवति । नवनं दधाति । स यथा स्तुत्या कामानाविष्कुरुत एवमुषा रूपाण्याविष्कुरुते । अद्मसत् । अद्मसन्नं भवति । अद्म-सादिनीति वा । अद्म सानिनीति वा । ससतो बोधयन्ती । शश्वत्तमागात्पुनरेयुषीणाम् । स्वपतो बोधयन्ती शाश्वतिकतमागात्पुनरेयुषीणाम् । पुनरागामिनीनाम् ।

अदुन्वत इति । एतदनवगतम् । अदुन्वादिनीति वा अदुन्तानिनीति वा शब्द समाधी । उषो अदर्शि इति निगमः । श्वोचित आगम । उषो अदर्शि उपश्लिष्टा दृश्यत् उषाः रस्य शुन्ध्युवः शोधयितुरादित्यस्य । कथम् ? वक्षो न वक्ष इव । उषाः आदित्य वक्ष इवोपश्लिष्टा दृश्यते । किं नोधा इवाविष्कृत प्रियाणि नोधा अर्पयति नहि यथा स्तुत्या प्रियाण्यात्मन आविष्कुरुते । एवं उषाः प्रकाशेन रूपाणि आविष्कुरुते प्रकाशीकुरुते । किं अदुन्वत् अन्नसाधिका स्त्री यथा प्रातरेव शरीरोपादानार्थं सतः स्वपतः जनान् दोहकादीन बोधयन्ती, उषा अपि जनान् बोधयन्ती शश्वत्मानात् शाश्वति कलमा आगात् आगच्छति ।

इष्मिणः (18)

"ते वाशीमन्त इष्मिणः" (ऋ. 87.6) ईषणिन इति ऐषणिन इति वार्षणिन इटिवा । वाशीति वाङ्नाम । वाश्यत् इति

---

1. नि. पृ., 179.

कुवित्ते सु इते सुते सुमते । प्रजायामिति वा ।" कुवित्ते मा वा:" । मै.सं. 1.2.7। इत्यपि निगमो भवति ।

कुवित्ते इति । एतदनवगतम् सु इते इति । सुते इति शब्द समाधौ । यदा सु इते इति तदा सुमते इत्यर्थः । यदा सुते इति तदा प्रजायाम् "सुते देवदत्तापुत्रमिति" प्रजायत इत्यर्थः ।"कुवित्ते माधा:-" इत्यपि निगमः । हे तानूनप्त्र । एवं मां कुवित्ते सुमते स्थाने धेहि । अथवा यथा बहुपत्याः स्याम तथा कुर्वित्यर्थः ।

दयते [21]

दयतिरनेक कर्मा । "नवेन पूर्वं दयमानाः स्याम" । मै.सं 4.13.8 इत्युपदयाकर्मा ।" य एक इद्विदयते वसु" । इति दानकर्मा वा विभाग कर्मा वा ।" दुर्वर्तुर्भीमो दयते वनानि" । इति हिंसा कर्मा ।" इमे सुता इन्दवः प्रातरित्वना सजोषसा पिबतमश्विना तान् । अयं हि वामूतये वन्दनाय मां वायसो दोषा दयमानो अबूबुधत्" । दयमान इति ।

दयति इति । एष शब्दः अनेक कर्मा अनेकार्थः उपदया कर्मा उपदयेति रक्षणमुच्यते । नवेन धान्येन पूर्वं पुराणं दयमानाः रक्षतः

स्याम । यः इन्द्र एक इत् एक एव वि विविधं वसु धनं दयते ददाति कस्मै दत्तवते हवींषि । अथवा विभाग कर्मा । विदयते विभजते इत्यर्थः ।" दुर्वर्तुर्भीमो दयते वनानि" एतस्मिन्नु मन्त्रे दहति कर्मा । दुर्वर्तः दुर्वरणीय इत्यर्थः । भीमः सर्वप्राणि भयंकरो पदायमग्निः हिंसा कर्मा । पुनरता- विन्दः विदयमानः विविधं हिंसन् शत्रून ये मेधस्य प्रतिबन्धिनः । दयमान इति अत्र दयतिर्गत्यर्थः । दयमानः उड्डीयमानः काकोऽन्त- रिक्षगामित्वात् मां सुप्तं दोषायां प्रावेधयत् । दोषा रात्रिः । यथा- एषा हि योषा तिस वध दोषा तोषाय वेषां न महीतेति स्यात् ।

दावने अकूपारस्य [22]

"विद्यामतस्य ते वयमकूपारस्य दावने" । [ऋ. 5.39.2]

विद्यामतस्य ते वयमकूपरणस्य दानस्य ।

दावने अकूपार इति । एतदनवगतम् । दानस्य इत्यवगमः । अकूपारस्य इति । एतदनवगतम् । अकूपरणस्य इत्यवगमः । दयोदप्ये - तयोरेक एव निगमः ।"विद्याम तस्य ते वयमकूपारस्य दावने" । तत्र भौमस्येयमार्षम् । हे इन्द्र ! तस्य ते तव धनस्य दावने दानस्य विद्याम लभेमहि । अकूपारस्य अकूपरणस्य सर्वथा पूर्णस्येत्यर्थः । भावत्कस्य धनस्य वयमेव लब्धारः स्यामेत्यभिप्रायः ।

शिशीते [23]

"शिशीते शृङ्गे रक्षसे विनिक्षे"। [ऋ. 5. 2. 9] निश्यति शृङ्गे रक्षसो विनिक्षणाय। रक्षो रक्षितव्यमस्मात्। रहसि क्षणोतीति वा। रात्रौ नक्षत इति वा। शिशीते इति। एतदनवगतम्। निश्यति इत्यवगमः "शिशीते शृङ्गे रक्षसे विनिक्षे इति निगमः। यथा हि वृषभस्ता-ताञ्जिघांसन् शृङ्गेण तीक्ष्णीकरोति एवमग्निरपि दाहकाणि दंष्ट्रतीक्ष्णी करोति ज्वालाः। रक्षसां विनिक्षणाय विहिंसनायेत्यर्थः। विनिक्षे प्रदेशे क्षणोति हिनस्तीत्यर्थः। रात्रौ नक्षते गच्छति इति वा रक्षः। शिशीते तीक्ष्ण विशेषः।

सुतुकः [24]

अग्निः सुतुकः सुतुकेभिरश्वैः। [ऋ. 10. 3. 7] सुतुकनः सुतुकनैरिति वा। सुप्रजाः सुप्रजोभिरिति वा।

सुतुक इति। एतदनवगतम्। सुतुकनः इत्यवगमः। अग्निः सुतुकः "सुतुकेभिरश्वैः" इति निगमः। हे अग्ने सुतुकः सुतुकनः सुगमन इत्यर्थः। सुतुकनैरेव सुगमनैरश्वैः अथवा सुप्रजोभिः कुलजैरित्यर्थः। आगच्छेरस्मिह कर्मणि।

सुप्रायणाः [25]

"सुप्रायणा अस्मिन्यज्ञे वि श्रयन्ताम् ।" [यजु. 16. 25]

सुप्रगमनाः सुप्रायणा इति । एतदनवगतम् । सुप्रगमनाः इति शब्दव्युत्पत्तिः सुप्रायणा अस्मिन्यज्ञे वि श्रयन्ताम् इति निगमः एता द्वाराः । सुप्रायणाः सुगमना भवन्तु । अस्मिन्यज्ञे विश्रयन्ताम् कपाटोद्घाटनेन विश्रियन्ताम् ।

जामिः [26]

आगमिष्यन्ति तान्युत्तराणि युगानि । यत्र जामयः करिष्यन्त्यजामि कर्माणि । जाम्यतिरेकनाम । बालिशस्य वा । असमानजातीयस्य वोपजनः । उपधेहि वृषभाय बाहुम् । अन्यमिच्छस्व सुभगे पतिं मदिति व्याख्यातम् । जामिः भगिनी ।" आ घा ता गच्छान्-"इति । इयं यमी कृत युगे यमं प्रार्थयाञ्चकार । एहि मैथुनाय संगच्छाव इति । तान् कामयमानो जातनयनां प्रत्युवाच आ घा ता गच्छान "घा" इत्यनर्थक एव आगच्छान आगमिष्यन्तीत्यर्थः । ता तानि उत्तराणि युगानि । यत्र येषु जामयः भगिन्यः भ्रातृणाम् अजामि योग्यानि मैथुन सम्बन्धानि कर्माणि । करिष्यन्ति कलियुगान्ते । न चायं कलियुगो वर्तते इत्यभिप्रायः । अतो ब्रवीमि अपबर्हय हि उपधेहि, वृषभाय रेतोवर्षिणे, बाहुम् पाणिम् अन्यमिच्छस्व अन्यमन्विच्छ । हे सुभगे पतिं मद् मत्तः इत्यर्थः । नाहं तव

पतिमर्यं वता भवितुं शक्नोमिति भावः ।

शंयोः [27]

शंयुः सुखंयुः "यथा नः शं योरपो दधात्" [ऋ 10.15.4] रपो रिप्रमिति पापनामनी भवतः शमनं च रोगाणां यावनं च भयानाम् अथापि शंयुर्बार्हस्पत्य उच्यते । "तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये" इत्यपि निगमो भवति । गमनं यज्ञाय यज्ञपतये ।

शंयोः इति । एतदनवगतम् । पंचम्यन्तं वा षष्ठ्यन्तं वा स्यात् । निगमश्चैवः - "अथा नः शंयोररपो दधात" । कस्य शमनं कस्य वा यावनम् इति पर्यनुयोगेऽप्युच्यते रोगाणां भयानां च इत्यध्याहार भाष्यकारः । रोग शमनं च दधात भय यावनं च शान्तरोगा यथा स्याम प्रहीण सर्व भयाश्च तथा कुर्वित्यभिप्रायः यदपि वान्यत् किञ्चिद् अरपः अपापं तदपि दधात, दरतत्पर्यः बार्हस्पत्यो बृहस्पतेः पुत्र उच्यते । तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये" इति शंयोरेव बृहस्पतिपुत्रस्याशंसा । शंयोः सकाशादिति आभिमुख्ये वृणीमहे किम् गातुं गमनं यज्ञाय यज्ञपतये च । एते नैगमा शब्दाः ।

---

<u>सप्तमेऽध्याये</u>

तिस्रः देवताः इति एषां विकाराः अन्ये देवाः ।

अग्निः पृथिवीस्थानः । वायुर्वेन्द्रोवान्तरीक्षस्थानः ।

सूर्यो दिविस्थानः इति । अथ देवता स्वरूप विमर्शः ।

---

## सप्तमोऽध्यायः

तिस्र देवताः इति एषां विस्तराः अन्ये देवाः । अग्निपृथ्वी स्थानः । वायुर्वेन्द्रो वान्तरिक्षस्थानः । सूर्यो दिवि स्थानः इति । अथ देवत T

### स्वरूप विमर्शः ।

तिस्र एव देवता इति नैरुक्ताः । अग्निः पृथिवीस्थानः वायुर्वेन्द्रो वान्तरिक्ष स्थानः । सूर्यो   द्युस्थानः ।

अन्यत्रापीदमुच्यते प्रजापतिर्वै ओम्महिम्नोऽसृजताग्निं वायुं सूर्यम् । प्रजापति र्लोकानभ्यतपत् तेभ्योऽभि तप्तेभ्यो रसान्प्रावृहदग्निं पृथिव्या वायुमन्तरिक्षात्सूर्यं दिव इति तासां महाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति ।

अपि वा कर्मपृथक्त्वात् । यथा होताध्वर्युर्ब्रह्मोद्गातेत्यप्येकस्य सतः –

अपि वा पृथक्त्वहेतुको नामधेयभाक्: स्यात् । यथा होता, अध्वर्युः ब्रह्मा, उद्गाता इति एकस्यापि सतो नाना नामानि भवितुमर्हन्ति ।

अपि वा पृथगेव स्युः । पृथगपि स्तुतयो भवन्ति ।

अपि वा पृथक्-पृथक् अत्यन्त भिन्ना एवोत्पत्तिभेदेन भेदेन स्युरिति याज्ञिका आहुः । भवन्ति हेतौ, यस्मात् पृथक्-पृथक् अग्न्यादीनां स्तुतयो भवन्ति । पृथगग्नेः "अग्निमीळे" इत्येवमादयः । पृथग्जातवेदसः, "प्रनूनं जातवेदसम्" पृथक् सूर्यस्य "हरिद्वः" तदनुपपन्नं पर्यायवचनत्वे तेषाम् । तस्मात्स्तुति नियमात्पश्यामः । पृथक्पृथगग्निवैश्वानरप्रभृतय इति ।

तथाभिधानानि ।

यथैव हि स्तुति भेदात् स्तुत्यभेदः । एवमेवाभिधानभेदादभिधेय भेदोऽपि भवितुमर्हति । नैकस्यानेकाभिधायिता ।" आख्यातुर्वाऽभिधानं स्तोत्यमरादभिधानं नाम ।

---

1. नि. पृ. 336.

यथो एतत्कर्म पृथक्त्वादिति बहवोऽपि विभज्य कर्माणि कुर्युः ।

तत्र संस्थानैकत्वं सम्भोगैकत्वं चोपेक्षितव्यम् । यथा पृथिव्यां मनुष्याः पशवो देवा इति स्थानैकत्वम् । सम्भोगैकत्वं च दृश्यते । यथा पृथिव्याः पर्जन्येन च वाय्वादित्याभ्यां च सम्भोगः अग्निना चेतरस्य लोकस्य ।

तत्र तस्मिन् पृथक्त्वे सति संस्थानैकत्वं सम्भोगैकत्वं च उपपत्तिर्वा चिन्त्यम् । समस्थानतया एकत्वं स्थानैकत्वम् । सम्भोगो नाम इतरेतरोपकारित्वम्, समानकार्ये स्पर्धः । तच्च पुनः पुनर्भिन्नस्थानानाम् अपि भवति । यथा पृथिव्याः पर्जन्येन च वाय्वादित्याभ्यां च सम्भोगः । पृथिवी ओषध्युत्पत्तौ स्वकार्यारम्भे पर्जन्य वाय्वादित्यकृतम् उपकारं नोपेक्षते । तदुक्तम्- स्पर्शयन्ति पृथिवीमनुर्वाः इति । अग्निना च इतरस्य लोकस्य । तदप्युक्तम्- अग्निर्वा इति वृष्टिं समीरयति । दिवं जिन्वन्त्यग्नय इति ।

तदेतन्नरराष्ट्रमिव ।

तत्र तस्मिन्संदेहे सति, एतत् नरराष्ट्रमिव । यथा राष्ट्रमित्य भेदः । ~~तस्मिन्संदेहे/सति/एतत्/~~ नरा इति भेदः । एवं पृथिव्य-

अग्निरित्येकः जातवेदाः वैश्वानर इतिभेदः । एवं पृथिव्यग्निरित्येकः जातवेदाः वैश्वानर इतिभेदः । एवमेते पूर्वत्राप्यन्येन् त्रित्वमेवेति बोध्यम् ।

अथाकारचिन्तनं देवतानाम् ।[1]

यास्क वक्ष्यादनन्तरमिदमारभ्यम् अथाकार चिन्तनम् देवतानां इति पुरुषविधाः स्युरित्येकम् ।

किमाकारस्य चिन्त्यते ? किमस्ति उत नास्ति इह द्विविधा आकारिणोऽर्थाः चेतनाश्चाचेतनाश्च । तत्र चेतना मनुष्यादयः । अचेतनाश्च पाषाणादयः । तत्रैतद्भवति किमयां मनुष्यादिवच्चेतना उत पाषाणादिवच्चेतना तत्र पुरुषविधाः स्युरित्येकं मन्त्रेषु दर्शनम् । पुरुषप्रकाराः पुरुषविग्रहाः इत्यर्थः ।

---

1. निरु. पृ., 330.

चेतनावद्वद्धि स्तुतयो भवन्ति ।

अथापि पौरुषविधिकैरङ्गैः संस्तूयन्ते । "ऋष्वा त इन्द्र स्थविरस्य बाहू" [ऋ.6.47.8] "यत्संगृभ्णा मघवन्काशिरित्ते" [ऋ.3.30.5]

किंच पौरुषविधत्वे यान्यङ्गानि तैः संस्तूयन्ते । ऋष्वा- ऋष्वात इन्द्र स्थविरस्य बाहू उपस्थेयाम शरणं बृहन्ता । तस्य ते तवेन्द्रः ऋष्वा रेशणौ वा कूणौ वा ब्रुवाम "स्थविरस्य महतः, बाहू हस्तौ -बृहन्ता बृहन्तौ महान्तौ शरणाश्रयौ आश्रयणीयौ नित्यमु- पस्थयाम उपतिष्ठेमेत्येतदाशास्महे । ।"यत्संगृभ्णा मघवन्काशिरित्ते" दुरवारेऽपि रोदसी संगृभ्णासि यहौ हे इन्द्र ते महान काशिर्मुष्टिरिति वाक्यार्थः ।

अथापि पौरुषविधिकै द्रव्य संयोगैः । " आ द्वाभ्यां हरिभ्यामिन्द्र याहि ।" [ऋ 2.18.4]" कल्याणीर्जाया सुरणं गृहे ते [ऋ. 3.53.6] ।

आ द्वाभ्यां हे भगवन् ! इन्द्र यदि तावत्तव द्वौ हरी सन्निहितौ ताभ्यां हरिभ्यामायाहि । अथ चत्वारः ततस्तैः चतुर्भिः ।

कल्याणीजाया सुखं गृहे ते । हे मघवन् । इन्द्र तव कल्याणीजाया रण्वो सुखं यद्रमणीयं तत्तत्सर्वं ते तव गृहे वसति ।

[1]अथापि पौरुषविधिकैः कर्मभिः । "अद्धीन्द्र पिब च प्रस्थितस्य" । (ऋ. 10.116.7) "आश्रुत्कर्ण श्रुधी हवम्" ।।

अथापि अयमपरो हेतुः पौरुषविध्ये । पौरुषविधिकैः कर्मभिः संस्तूयन्ते देवताः । तथा अद्धीन्द्र पिब च प्रस्थितस्य । हे इन्द्र त्वमस्य सोमस्य प्रस्थितस्य प्रहृतः अद्धि पिब च स्वमंशमिति शेषः ।

आश्रुत्कर्ण श्रुधी हवम् हे श्रुत्कर्ण इन्द्र आभिमुख्येन श्रुणो शृणु स्वकं हवम् – आह्वानमस्माकम् । तदेव लिङ्ग पंचकेन पुरुष विधत्वं सिद्धम् ।

---

1. निरु. पृ. 341.

अपुरुषविधाः स्युरित्यपरम् ।

अपुरुषविधाः स्यु इत्यपरम् दर्शनमिति वाक्यशेषः ।

अपि तु यद् दृश्यतेऽपुरुषविधं तत् । यथाग्निर्वायुरादित्यः पृथिवी चन्द्रमा इति ।

यद् देवताकारादिकं दृश्यते अपुरुषविधा अग्न्यादयः तत्सामान्यादिन्द्रादयोऽप्यपुरुषविधा देवतात्वाविशेषादिति भावः ।

[1]तिस्र एव देवता इत्युक्तंपुरस्तात् । तासां भक्तिसाहचर्यं व्याख्यास्यामः ।

अथैतान्यग्निभक्तीनि । अयं लोकः । प्रातः सवनम् । वसन्तः । गायत्री । त्रिवृत्स्तोमः रथन्तरं साम । ये च देवगणाः समाम्नाताः प्रथमे स्थाने । अग्नायी पृथिवी इळेति स्त्रियः ।

अथेति विशेषाधिकारे । अग्निं भजन्ते, अग्निना वा भज्यन्ते इत्यग्निभक्तीनि । अयं भूलोकः । वसन्त ऋतुः । गायत्री छन्दः ।

---

1. नि. पृ. 543.

स्तोम इन्भागः । साम -सामवेद भागः प्रथमे स्थाने भूलोके ।

अथास्य कर्म । वहनं च हविषामावाहनं च देवतानाम् । यच्च किंचिद् दार्ष्टिविषयिकम् अग्निकर्मैव तत् ।

अथास्य - अग्नेः कर्म सहभावि वहनं च हविषा- मित्येवमादि दार्ष्टिविषयकम्- प्रकाशादिकर्मेत्यर्थः ।

अथास्य संस्तविका देवाः । इन्द्रः । सोमः । वरुणः । पर्जन्यः । ऋतवः ।

"इन्द्र अग्निश्च दाशुषो दुरोणे सुतावतो यज्ञमिहोपयातम् " इतीन्द्रेण संस्तवः ।

"अग्नीषोमाविमं मे शृणुतं वृषणा हवम्" इति सोमेन सह संस्तवः । "त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अवयासिसीष्ठाः" इति वरुणेन ।

"अग्नीपर्जन्याववतं धियं मेऽस्मिन् हवे सुहवा सुष्टुतिं नः" इति पर्जन्येन ।

"अग्ने देवाँ इहावह सादय योनिषु त्रिषु । परिभूष पिब ऋतुना" इति ऋतुभिः संस्तवः ।

अग्नेः कर्म:

वहनं च हविषा आवाहनं च देवतानाम् । यच्च किंचित् दार्ष्टिविषयकमग्निकर्मैवतत् । दार्ष्टिविषयकं - प्रकाशादिकर्मेत्यर्थः । अग्निः पृथिवीस्थानः ।

पृथिव्येवास्य विशेषतः स्थानम्, न अन्तरिक्षं न द्यौ, तत्र कर्माधिकारात्तस्य ।

अग्निः कस्मात् । अग्रणीर्भवति । अग्रं यज्ञेषु प्रणीयते । अङ्गं नयति सन्नममानः ।

यथा- अग्निर्वै देवानां सेनानीः । अथवा अङ्गं नयति सन्नममानः पदार्थं सन्नमयति साधनत्वेन वैदिके वा लौकिके कार्ये, तत्र सन्नममान एवात्मानं प्रधानीकृत्य सर्वमन्यदात्मनोऽङ्गतां नयति गुणीकरोतीत्यर्थः ।

यथा लिखितं स्मृति --

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ।।

अग्नेः व्याख्या: अक्नोपनो भवतीति स्थौलाष्ठीविः । न क्नोपयति न स्नेहयति ।

स्थूलाष्ठीवेः पुत्रः स्थौलाष्ठीविः आचार्यः अक्नोपनो भवतीति तस्मादग्निरिति। न स्नेहयतीति विशदीकरोतीत्यर्थः स हि तस्य स्वभावः।

त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः। इतात् अक्ताद्दग्धाद्वा। नीतात्। स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परः।

पदानां धातूनामभिधेयाः क्रिया अत्र लक्ष्यन्ते। तद्यथा इतात्- "इण्" गतौ इत्यस्मादित्यर्थः अक्तात् दग्धाद्वा अनक्तेर्वा दहतेर्वा विकल्प एतयोः। ततः "नीतात्-"णीञ्" प्रापणे इत्येतस्मात् स खलु शाकपूणिराचार्यः एतेः धातोः अकारम् आदत्ते गकारम् अनक्तेर्वा दहतेः कृतकृत्य, अक्त्व, कृतधत्व, अक्त्वयोर्विकल्पेन नीः, परः स प्रत्ययः, एति च व्यनक्ति च रूपाणि, अथवा एति च दहति च नयति च हवींषि देवेभ्य इत्यग्निः।

तस्यैषा भवति।

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्।" [ऋ. 1.1.1]

अग्निमीळेऽग्निं याचामि। ईळिरध्येषणाकर्मा। पूजाकर्मा वा। पुरोहितो व्याख्यातो यज्ञश्च। देवो दानाद्वा। दीपनाद्वा

द्योतनाद्वा । द्युस्थानो भवतीति वा यो देवः सा देवता होतारं ह्वातारं जुहोतेर्होतेत्यौर्णवाभः । रत्नधातमं रमणीयानां धनानां दातृतमम् ।

अथातो मध्यस्थाना देवताः ।
तासां वायुः प्रथमागामी भवति ।
वायुर्वातेर्वेतेर्वा स्याद्गतिकर्मणः, एतेरिति स्थौलाष्ठीविः, अनर्थको वकारः ।

वायवायाहि दर्शतेमे सोमा अरंकृताः अलंकृतास्तेषां पिब शृणु नो ह्वानमिति ।

कमन्यं मध्यमादेवमवक्ष्यत् ।

तस्यैषापरा भवति —

आसस्राणासः शवसानमच्छेन्द्रं सुचक्रे रथ्यासो अश्वाः ।
अभिश्रव ऋज्यन्तो वहेयुर्नू चिन्नु वायोरमृतं विदस्येत् ॥
[ऋ. 6.37.3]

आसस्राणासोऽभिसरमाणमिन्द्रं कल्याणचक्रे रथे योगाय रथ्या अश्वा इ रथस्य वोढारः ऋज्यन्त ऋजुगामिनोऽन्नमभिवहेयुर्नवं च पुराणं च । नव अस्यन्ननाय छूदत इति ततः । वायोश्चास्य भक्षो

यथा न विहन्येदिति ।

इन्द्रप्रधानेत्येके नैघण्टुकं वायुकर्मोभयप्रधानेत्य परम् ।

तथा चोक्तम् - वान्ति पर्णशुषो वाताः ततः पर्णमुचोऽपरे ।

ततः पर्णरुहोवान्ति ततो देवः प्रवर्षति ।।

वाति इति वायुः गतिकर्मणः वेतेर्वा । स्थौलाष्ठीवी आचार्यः एकारमनर्थकमुपजनं मन्यमानः एतेः वायुं साधयति । तस्यैषा-"वायवायाहि ..... श्रुधीहवम्" हे दर्शत दर्शनीय वायो आयाहि इमे सोमाः स्वदर्थम् । अरंकृता-अलंकृताः पर्याप्ताः पातुं संस्कृता इत्यर्थः । तेषां सोमानां यस्तवांशः तं पिब । नः हवम् -आह्वानम् श्रुधि-शृणु ।

कमन्यमिन्द्रादन्यं मध्यमात् देवात् मन्त्रदृक् अपश्यत् तस्मादिन्द्र एव वायुः ।

इन्द्रशब्दनिर्वचनम् । देवतास्वरूप विमर्शः ।

इन्द्र इरां दृणातीति वा । इरां ददातीति वा । इरां दधातीति वा । इरां दारयत इति वा । इरां धारयत इति वा । इन्दवे द्रवतीति वा । इन्दौ रमत इतिवा । इन्धे भूतानीति वा । तद् यदेनं प्राणैः समैन्धस्तद् इन्द्रस्येन्द्रत्वमिति विज्ञायते ।

अथातो द्युस्थानादेवगणाः ।

तेषामादित्याः प्रथमगामिनो भवन्ति ।

आदित्या व्याख्याताः । तेषामेषा भवति ।

इमा गिर आदित्येभ्यो घृतस्नुः सनाद्राजभ्यो जुह्वा जुहोमि ।
शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः ।।

[ ऋ. 2.27.1 ]

घृतस्नुः घृतप्रस्नाविन्यः घृतप्रस्राविण्यः, घृतसानिन्यः, घृतसारिण्य इति वा ।

आभ्यो गिरादित्येभ्यश्चिरंजुह्वा जुहोमि चिरं जीवनाय, चिरं राज्याय इति वा, शृणोतु न इमा गिरो मित्रश्चार्यमा च भगश्च बहुजातश्च धाता दक्षो वरुणोऽंशश्च ।

अंशोऽंशुना व्याख्यातः ।

सप्त ऋषयो व्याख्याताः तेषामेषा भवति—

सप्त ऋषयः प्रतिहिताः शरीरे रश्मय आदित्ये सप्त रक्षन्ति सदमप्रमादं संवत्सरमप्रमाद्यन्तः सप्तापनात्त एवं स्वपतो लोकमस्तोमांमादित्यं यन्त्यत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ वाय्वादित्यावित्यधिदैवतम् ।

अथाध्यात्मम् सप्तऋषयः प्रतिहिताः शरीरे षडिन्द्रियाणि विद्या सप्तम्यात्मनि सप्त रक्षन्ति सदमप्रमादं शरीरमप्रमाद्यन्ति सप्तापना-नीमान्येव स्वपतो लोकमस्तमित आत्मानं यन्त्यत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ प्राज्ञात्मा तैजसश्चेत्यात्मगतिमाचष्टे ।

देवाः व्याख्याताः देवो दानाद्वा, दीपनाद्वा, द्योतनाद्वा ।

तेषामेषा भवति-

देवानां भद्रा सुमतिर्ऋजुयतां देवानां रातिरभिनो निवर्तताम् ।
देवानां सख्यमुपसेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे ॥

{ऋ. 1. 89. 2}

देवानां वयं सुमतौ कल्याण्यां मतावृजुगामिनामृजुगामिनामि-च्छता । देवानां दानमभि नो निर्वर्ततां देवानां सख्यमुपसदेम वयं देवा न आयुः प्रवर्धयन्तु चिरंजीवनाय ।

गोतमस्यार्षम् ये एते देवाः रश्मयः तेषां, ऋजुयताम् ऋतौ ऋतौ यथा कालमस्मात् मण्डलात् गच्छताम् भद्रा कल्याणी शोभनामतिः रातिः च- धन लाभश्च नः अस्मान् अभि-प्रति निर्वर्तताम्-निःशेषेण वर्तताम् । ततश्च तेन धनलाभेन, वयं तेषामेव देवानां सख्यं समानमंगमाप्य

उपेतदिम— उपगच्छेम ।

साध्याः देवाः[1]

साध्या देवाः साधनात् । तेषामेषा भवति ।

ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ।।

यज्ञेन यज्ञ मयजन्त देवा अग्निनाग्निमयजन्त देवाः। अग्निः पशुरासीत्तमालभन्त तेनायजन्त इति च ब्राह्मणम् । "तानि धर्माणि प्रथमान्यासन्" । ते ह नाकं महिमानः समसेवन्त यत्र पूर्वे साध्याः सन्ति देवाः साधनाः । द्युस्थानो देवगण इति नैरुक्ताः ।

---

1. निरु. 12, पृ. 576.

---

§ सप्तमोध्यायः §

## उपसंहारः

प्रथमेऽध्याये अतिपरोक्ष शब्दाः शुक्लयजुः मध्ये ये सन्ति तेषां संग्रह वर्तते ।

यथा इषे त्वोर्जे त्वा वायवस्थदेवोवः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्मा मा वस्तेनः ईशत माघशंसो ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि एतन्मध्ये अघ्न्या इति । अनेनैव प्रकारेण सन्ति ।

अनुबन्ध चतुष्टयो विचाराः सन्ति । एवं च तृतीयेऽध्याये निरुक्तमत्या कः अस्यां विद्यायां अधिकारी वर्तते केनं पुरुषं देयम् केनं न देयम इति विचारौ वर्तते शिष्यस्य किं लक्षणम् वा वर्तते ।

अति परोक्षशब्दस्य धातुनिरूपणं अर्थ सम्पादनम् च वर्तते ।

पंचमेऽध्याये शुक्ल यजुः मध्ये ये ये कठिन शब्दाः सन्ति तेषां निर्वचनम् वर्तते ।

नैगम शब्द जातानां निरूपणम् आतम् सप्तमे निरुक्त्यः देवताः अग्न्या कुत्रस्थानः वायोः कुत्र स्थानः सूर्यस्य कुत्र स्थानः एवं च देवानां व्याख्यानम् वर्तते ।

ॐ भू र्भुवः स्वर्द्यौरिव भूम्नापृथिवी व वरिम्णा ।
तस्यास्ते पृथिवि देवयजनि पृष्ठेऽग्निमन्नादमन्नाद्यायादधे ॥

ॐ आयंगौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ।

ॐ अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो दिवम् ।

ॐ त्रिं शद्धामविराजति वाक् पतङ्गाय धीयते । प्रतिवस्तोरहद्युभिः ।

ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योति ज्योतिः सूर्यः
स्वाहा । अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्योवर्चो ज्योतिर्वर्चः स्वाहा ।
ज्योतिः सूर्यः सूर्योज्योतिः स्वाहा ॥

---

## सहायक ग्रन्थानां सूची:


[1] शुक्ल यजुर्वेद संहिता
श्री मद उवटाचार्य विरचित मन्त्रभाष्येण
एवं च महीधराचार्यकृतं भाष्यम् -

[2] यास्कमुनिप्रणीतम्
निरुक्तम् व्याख्याकार:
म.म.पं. छज्जूराम शास्त्री

[3] पिङ्गलछन्दसूत्रम्

[4] याज्ञवल्क्यशिक्षा

[5] कात्यायन श्रौतसूत्रम्
व्या. डा. सुन्दर देवकृत

[6] शतपथ ब्राह्मणम्

[7] कात्यायन शुल्बसूत्रम्

[8] ऋग्वेदभाष्यभूमिका

[9] जैमिनिन्याय माला

[10] चरणव्यूह सूत्रम्

[11] यजुर्वेदभाष्य भूमिका

[12] कठोपनिषद्

आदि ।

